Rs 4/-

॥ ॐ ॥

# पदार्थतत्त्वनिर्णयः ॥

# Padarthatatvanirnaya

श्री आनन्दानुभवाचार्यविरचितः

सटिप्पणः

अद्वैतसभापण्डितेन

पण्डितराजेन

S. सुब्रह्मण्यशास्त्रिणा

संशोधितः

अद्वैतसभा

कुम्भघोणम्

1951

# Padarthatatvanirnaya.

Readers of Siddhantalesangraha may be aware of *Padarthatatvanirnaya* which has been referred to there in page 72 (Banares Edn.). This work is also by Anandanubhava the author of Nyayaratnadipavali and Istasiddhivivarana. The publication of the former is going on in '*Brohmavidya*' and now we have taken up Padarthatava nirnaya for publication for the first time.

Padarthatavanirnaya by its very name suggests that a dicision about the truth of the Categories is arrived at in this work. The author begins his work with a long Purvapaksha wherein he states that Advaita or Monism is unteneable since the categories are six according to Kanada, sixteen according to Gautama, Sakti and identity in addition according to Bhatta, infinite and momentary according to Yogacharas and nil according to Madhyamikas. Digambaras Charvakas and other philosophers accept different categories.

In explaining the views of Kanada extensively our author writes small compendium of the Tarkasastra. He agrees with modern Tarki when he says that all the sixteen Categories of Gautama are included in the six Padarthas of Kanada. Ths first part of the work comprises the whole puruvapaksha.

In the second part our author establishes the view of the Siddhantin that duality has no proof since bheda or difference itself cannot be proved and Advaita or the One Brahman without a second alone is the real Category. The affairs of the empirical world can be carried on even by the Categories which have no real but only an empirical existence. Even in empirical existence the number of categories cannot be fixed as six since qualified Categories like दण्डी etc. are different.

The author condemns the Tarkika view of God as a different person. As regards the views of Bhattapada, Anandanubha favours only those that are not opposed to Vedanta, The views of Bandthas, Digambaras, and Charvakas he condemns totally. Atman's nature of self-luminosity, infinite bliss, and secondlessness are herein questioned, and established.

In the third part of the work our author explains the nature of categeries as accepted by Advaitins. They accept only two categeries namely दृक् and दृश्य. The former is atman and the later is the non-sentient world which is the outcome of and of the nature of Maya: Both Brhman and Maya are the material causes of the world with the difference that the former is the Vivartopadana like a shell in respect of a piece of silver for which it is mistaken and the latter is the parinamyupadana like a lump of clay in respect of a jar. Maya is a positive category. It

is the cause of bondage and its destruction the cause of release or release itself. Our author establishes the theory that bodies are made of five elements (पाञ्चभौतिक) and refuses the view of the Tarkikas that they are built of earth alone. He condemans the Tarkika view of knowledge etc as the qualities of Atman.

He then takes up the definition of valid knowledge and refuting the opposite views arrives at the conclusion that "The cognition of an object not cognised before", is valid knowledge.

Lastly he accepts the mimamsaka view of six pramanas and declares that Vedantas give birth to the realization of the identity of Jiva with Brhman.

About the date of the author I have discussed in my preface to Nyayaratna Dipavali and I have nothing more to add.

S. S. SASTRI.



॥ श्रीः ॥

# पदार्थतत्त्वनिर्णयः

आनन्दानुभवपूज्यपादविरचितः

प्रणम्य विश्वसाक्षिणं गुरूंस्तदात्मनस्तथा ।
पदार्थतत्त्वनिर्णयः प्रवक्ष्यतेऽप्रबोधनुत् ॥ [1]

स जयति सिन्धुरवदनो
देवो यत्पादपङ्कजस्मरणम् ।
वासरमणिरिव तमसां
राशिं नाशयति विघ्नानाम् ॥

शिष्टाचारप्राप्तेष्टदेवतागुरुनमस्कारच्छलेन प्रारब्धग्रन्थार्थं तत्प्रयोजनं चाह —**प्रणम्येति** ॥ [2] विषयप्रयोजन-कथनेनार्थात् सम्बन्धोऽधिकारी च दर्शितः ॥ विश्वस्य साक्षी विश्वसाक्षी । [3] अथवा विश्वश्चासौ साक्षी चेति विग्रहः । स्वाध्यस्तं विश्वं तादात्म्यसम्बन्धात् [4] साक्षादीक्षत इति विश्वसाक्षी । अतः स्वयं ज्योतिरद्वितीयश्चेत्युक्तं भवति । नहि तटस्थस्य ज्ञानवतः साक्षादीक्षणमुपपद्यते । ज्ञानार्थयोः संयोगाद्यसंभवात् । नहि तटस्थे सर्वज्ञे किञ्चिन्मानमस्ति । सर्वं चैतत् सिद्धान्तपरिच्छेदे स्फुटं वक्ष्यामः, तं विश्वसाक्षिणं गुरूंश्च तदनुभवतः तदात्म-भूतान् भक्त्यादिप्रकर्षेण नत्वा दृग्दृश्यपदार्थयोर्याथात्म्यनिर्णय इत्थं तन्नान्यथेत्यवधारणं विशदं वक्ष्यते । [5] स चाज्ञानसंशयविपर्ययोपशमहेतुः ।

ननु मानबलात्तत्त्वमन्यथान्यैर्निरूपितम् ।
न चागमात् तथासिद्धिः प्रत्यक्षादिविरोधतः ॥

ननु भिन्नान्येव पदार्थतत्त्वानि । कणादाक्षपादादिभिः निरूपितानि । ततो नात्मा अद्वितीयः । नापि विश्वमा-रोपसिद्धम् । न च तान्यतत्त्वानि, प्रत्यक्षादिविषयत्वात् । तद्मानं अनात्मविषयत्वात् स्वप्नप्रत्ययवदिति चेत्, न ;

---

[1] A प्रबोधकृत

[2] न चानेकार्थत्वे वाक्यभेदः ; एकस्यापि वाक्यस्य श्रुत्यर्थाभ्यां अनेकार्थत्वसम्भवात् । आ

[3] षष्ठी सम्बन्धमपेक्षते, तत्र विधानात् । स च द्विष्ठत्वात् भेदमकाङ्क्षते अद्वैतवादिमते च तदभावात् न षष्ठीतत्पुरुषोपपत्तिरित्याशङ्क्य स्वाध्यस्तमित्यभिधास्यमानं हृदि कृत्वा निषादस्थपतिन्यायेन कर्मधारय-माह—अथवेति ।

[4] साक्षादिति ज्ञानरूपतामाह ।

[5] अप्रबोधशब्दस्य संशयाद्युपलक्षणत्वमङ्गीकृत्याप्रबोधनुदित्यस्यार्थमाह—**स चेति** ।

[1] मानापलापे धर्म्याद्यसिद्धेः। आगमबलात् अद्वितीयत्वादिसिद्धेः, तत्त्वातत्त्वमानव्यवस्था ; अतो मानान्तराविरोध इति चेत्। न। विरोधात्। प्रत्यक्षादेर्मानत्वेद्वतत्त्वविषयत्वं स्फुटं व्याहन्येत। अतः प्रत्यक्षादिविरोधादुपनिषदोऽपि [2] द्वैतमानत्वम्। तस्मात् कणादाद्युक्तमेव पदार्थतत्त्वमास्थेयम् ॥

**द्रव्यादयः पदार्थाः षट् प्रसिद्धा लोकमानयोः।**
**तस्माद्वास्तवमद्वैतं मनोराज्यविजृम्भितम् ॥**

इहैव ते पदार्थाः बालव्युत्पत्त्यर्थं संक्षेपतः प्रदर्श्यन्ते। तथा हि — द्रव्यगुणकर्मसामान्यविशेषसमवायाख्याः षडेव पदार्थाः। अभावस्तु पदार्थनिषेधरूपत्वात् न पदार्थत्वेनास्थीयते। न हि पदस्य [3] प्रमाणस्य वा अर्थ इति पदार्थोऽवगम्यते ; अन्यथा दण्डी वनमित्यादयः पृथक् पदार्था इति सप्तपदार्थ्यपि न स्यात्। तस्मात् भावरूपा द्रव्यादयो लोकप्रमाणप्रसिद्धाः षडेव पदार्थाः। अतो न तत्त्वतः आत्मा अद्वितीयः सिध्यति। किन्तु उपासनाविषयत्वेन श्रुत्या तथोच्यते ; यथा 'अन्नं ब्रह्म' इति (तै- ३-२)। [4] तत्र गुणवत् द्रव्यम्। सामान्यवान् संयोगविभागहेतुजातीयेतरो गुणः। सामान्यादावतिव्याप्तिपरिहारार्थं सामान्यवानिति विशेषणम्। द्रव्ये कर्मणि च नातिव्याप्तिः। संयोगादिद्वयसमवाय्यसमवायिहेतुजातीयान्यत्वस्य विवक्षितत्वात्। अतः संयोगविभगेश्वरप्रयत्नादावव्याप्तिर्निरस्ता। विनश्यदवस्थगतं कर्म आश्रयाभावात् संयोगाद्यकारणमिति जातीयग्रहणम्। अतोऽगुण इत्याद्यन्योक्तं [5] विशेषणं व्यर्थं अव्यभिचारात्। [6] संयोगविभागयोरसमवायिकारणजातीयं कर्म। [7] नित्यमेकमनेकवृत्ति सामान्यम्। वृत्तिशब्देनात्र समवायो विवक्षित इति नात्मनि समवाये वातिव्याप्तिः॥ अत्रैकमिति विशेषणमुदयनोक्तं व्यर्थं व्यभिचाराभावात् ॥

---

[1] प्रत्यक्षादेः मानत्वमेव निषिद्ध्यते ? तत्त्वावेदकत्वं वा ? नाद्यः, तदभावे तदपेक्षधर्मिहेत्वाद्यसिद्धेः-अनुमानमात्रानुदयात्। द्वितीयं निराचष्टे-- आगमेति

[2] उपासनादिपरतयेति शेषः

[3] पद्लृ गतौ इति धातुनिर्देशेन प्रमाणविषयत्वं पदार्थत्वं अभावश्चानुपलब्धिप्रमाणगम्यः अभावपदवाच्यश्चेत्यर्थः।

[4] द्रव्यस्य गुणाश्रयत्वेन प्राधान्यात् प्रथमतो लक्षणमाह —**तत्रेति।**

[5] यत्तु कन्दलीकारेण सामान्यवान् अगुणः संयोगविभागयोरनपेक्षो न कारणं गुण इत्युक्तम्. तत्र आद्यविशेषणादुत्तरत्रयव्यावृत्तेः तृतीयेन द्रव्यकर्मव्यावृत्तेः अगुणोऽनपेक्ष इति व्यर्थमित्याह—**अत इति।**

[6] अव्यभिचारेण गुणानुविधायितया प्रत्यक्षस्य कर्मणो लक्षणमाह—**संयोगेति।** संयोगविभागयोरतिव्याप्तिवारणाय-**संयोगविभागेति।** द्रव्यवारणाय—**असमायीति।** विनश्यदवस्थकर्मणि अव्याप्तेः **जातीयेति।**

[7] पूर्वत्रिकलक्षणानन्तरं तन्मात्रवृत्तेः सामान्यस्य लक्षणमाह—**नित्यमिति।**

निस्सामान्याः अत्यन्तव्यावृत्तिबुद्धिहेतवो विशेषाः ॥ अदृष्टादेः सामान्यवत्त्वान्नातिव्याप्तिः । [1] यत्तु—नित्यद्रव्येष्वेवेत्यादिलक्षणं तत्प्रत्येकं विशेषेष्वभावात् अव्याप्तम् । नित्यः सम्बन्धः समवायः ॥

तत्र पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनांसि नवैव द्रव्याणि । तमसो न दशमत्वमालोकसंसर्गाभावरूपत्वात् । सुवर्णस्य च तेजस्यन्तर्भावात् । तस्य हि घृततैलादिवन्न पार्थिवत्वम् अत्यन्ताग्निसंयोगे विनाशादर्शनात् । न च दण्ड्यादि पदार्थान्तरम्, विशेषणविशेष्यतत्सम्बन्धा हि विशिष्टशब्दवाच्याः । वनमिति चैकदेशसम्बन्धाद्वृक्षा एव । न हि विशेषणादिव्यतिरिक्ते विशिष्टे किञ्चिन्मानमस्ति, नाप्यौपाधिके । तस्मान्नवैव द्रव्याणि ॥

रूपरसगन्धस्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नगुरुत्वद्रवत्वस्नेहसंस्कारधर्माधर्मशब्दाश्चतुर्विंशतिरेव गुणाः । यद्यपि गुणेषु न संङ्ख्यास्ति तथापि चतुर्विंशत्याकारबुद्धिविषयतया द्रव्यसारूप्येण चतुर्विंशतिरित्युच्यन्ते ॥

उत्क्षेपणावक्षेपणाकुञ्चनप्रसारणगमनानि पञ्चैव कर्माणि । भ्रमणरेचनोर्ध्वज्वलनव्युत्पतननमनोन्नमनानि तु गमनविशेषाः ॥

सामान्यं द्विविधम् परमपरञ्च । परं सत्ता अधिकवृत्तित्वादपरं द्रव्यत्वादि न्यूनवृत्तित्वात् ॥

यत्तु—सत्त्वमसत्त्वात् व्यावृत्तत्वम् । तदसत् । अन्योन्याश्रयताप्रसङ्गात् । तथाहि—सत्त्वबोधाधीनः सत्त्वनिरूपणीयस्यासत्त्वस्य बोधः तथाऽसत्त्वबोधाधीनोऽसत्त्वव्यावृत्तत्वरूपसत्त्वबोध इति । [3] योऽपि प्रमाणविषयत्वं तद्योग्यत्वं वा सत्त्वमाह तस्य सत्त्वमचाक्षुषं स्यात् । तस्मात् सत्तासामान्यं द्रव्यगुणकर्मणां सहजो धर्मः न त्वौपाधिकः ॥

अन्त्या विशेषास्त्वनन्तास्तद्व्यावृत्तानां नित्यद्रव्याणामनन्तत्वात् ॥

समवायस्त्वेक एव । एवं षडेव पदार्थाः । शक्तिस्तु – द्रव्यादिस्वरूपमेव तत्पृथक्त्वे मानाभावात् ॥ यत्तु—[4] अयमग्निरद्विष्ठातीन्द्रियाश्रयः कारणत्वात् गुरुत्वाश्रयवत् इति मानम् । तदग्नेर्वायुपरमाण्वाश्रयताश्रयणात् सिद्धसाधनम् वायुपरमाणवो ह्यविरलाएव सर्वत्र स्थिताः । अन्यथा व्यजनाभिघातेऽपि वातानुत्पत्तिप्रसङ्गात् । अथ अन्यथा कार्यानुपपत्ति [5] रूपा प्रतिबन्धानुपपत्तिरूपा वा अर्थापत्तिरत्र मानम् । तदसत् । न हि शक्तिं विना कार्यानुपपत्तिः कारणसाकल्यादपि तदुपपत्तेः । नापि प्रतिबन्धानुपपत्तिः तस्य विसामग्रीरूपत्वेनोपपत्तेः ॥ यथाहोदयनः—'प्रतिबन्धो विसामग्री तद्धेतुः प्रतिबन्धकः' । 'भावो यथा तथाऽभावः कारणं कार्यवन्मतः' इति च । ननु वन्ह्यादिसामग्र्यां सत्यां

---

[1] नित्येष्वेव द्रव्येष्वेव वर्तन्त एव ये तेऽन्त्या विशेषा इति श्रीधरोक्तमनूद्य दूषयति—यत्त्विति । एकैकस्य एकैकस्मिन्नेव नित्ये वृत्तेः इत्यर्थः

[2] A. अपक्षेपण [3] मीमांसकमतमाह—योपीति

[4] तेजोद्व्यणुकव्यावृत्त्यर्थमयमिति । वायुसंयोगेन सिद्धसाध्यत्वं प्रत्याह—अद्विष्ठेति । रूपादिना तद्वारणाय—अतीन्द्रियेति ।

[5] B. omits this

नन्वेवं सति प्रतिबन्धो दृश्यते। न। प्रतिकूले सति सामग्र्यसंभवात्। तदा प्रतिकूलाभावरूपकारणाभावात्। तदेवं शक्तिः न पदार्थान्तरम्। एवमन्यैरुत्प्रेक्षितं अन्यदपि यथासंभवमुक्तेष्वेवान्तर्भावनीयम्। तस्मात् सूक्तं षडेव पदार्था इति ॥

व्याप्त्यादिग्रहसिद्ध्यर्थं साधर्म्यादि निरूप्यते।
तदभावे न हि व्याप्तिराभासस्य ग्रहस्तथा ॥

साध्यसाधनयोरन्वयव्यतिरेकरूपा व्याप्तिः, तद्वतः साधनस्य पक्षधर्मता, तदभावश्चाभासः, पदार्थानां साधर्म्यवैधर्म्यसिद्धौ हि शक्यग्रहः स्यात् अतः साधर्म्यादि निरूप्यते ॥

नन्वेवं स्फुटः सिद्धान्तविरोधः। साधर्म्यादिनिरूपणं हि काणादैर्मोक्षार्थमुक्तम्; व्याप्त्यादिग्रहार्थत्वे स्फुटो विरोधः। न, व्यवधानाव्यवधानाभ्यामुभयार्थत्वाविरोधात्। तथाहि—पदार्थसाधर्म्यादिनिर्णये सत्यनुमानागमाधीनं धर्मानुष्ठानम्, उपास्यतत्त्वनिश्चयश्च, ततः उपासनानिमित्तादुपास्यसाक्षात्काराद्धर्मसमुच्चितादपवर्ग इति केचित्॥ [1]

उदयनः पुनः परंपरयैव साधर्म्यादिनिर्णयनिमित्तादुपास्यसाक्षात्कारादेवापवर्गमाह। इह तु साक्षात् साधर्म्यादिनिर्णयो व्याप्त्यादिग्रहे हेतुर्वर्ण्यत इत्यविरोधः ॥

तत्र षण्णामपि पदार्थानां साधर्म्यं समानधर्मता अस्तित्वाभिधेयत्वज्ञेयत्वानि। तत्रास्तित्वमस्तीतिप्रत्ययविषयत्वम्। अभिधेयत्वमभिधानप्रतिपाद्यता, शब्दसङ्गत्युपाधिको धर्मः। एवं ज्ञेयत्वमपि व्याख्येयम् ॥

यद्यप्यस्तित्वादि अभावेऽप्यस्ति तथापि षण्णां पदार्थानां साधर्म्यमविरुद्धम्। आश्रितत्वमाधारसन्निकृष्टता स्वाभाविकी अन्यत्र नित्यद्रव्येभ्यः। मूर्तं विहाय निष्क्रियत्वम्। मूर्तं परिच्छिन्नपरिमाणवत्। द्रव्यादीनां पञ्चानां समवायसम्बन्धित्वानेकत्वसमवायान्यत्वानि। गुणादीनां पञ्चानां निर्गुणत्वनिष्क्रियत्वे। द्रव्यादीनां त्रयाणां सत्तासम्बन्धो द्रव्यत्वादिसामान्यविशेषवत्त्वं, वैशेषिकसमयसिद्धार्थशब्दाभिधेयत्वाधर्मकर्तृत्वधर्मकर्तृत्वानि। अधर्मं विहाय धर्मकर्तृत्वं धर्मं विहायाधर्मकर्तृत्वमिति द्रष्टव्यम्। जात्यादीनां तु न साक्षात् धर्मादिकर्तृत्वमाश्रयावच्छेदकत्वेनान्यथासिद्धेः ॥

ननु एवमरुणिमादिगुणानामप्यन्यथासिद्धिः किं न स्यात्। न। अरुणिमादेर्हि साधनविशेषणतया [3] विवक्षितत्वात् क्रयणभावनान्वययोग्यत्वाच्च धर्मसाधनत्वमवगम्यते। 'अरुणयैकहायन्या पिङ्गाक्ष्या गवा सोमं क्रीणाति' इति। एवं 'गवा यजेते'ति जातेरपि धर्मसाधनतावगम्यत इति चेत्। न। तस्याः पुरोडाशरूपेण यागभावनान्वयासंभवादुपलक्षणत्वमिति हि वैशेषिकसमयः। तेषामेव त्रयाणां कार्यत्वानित्यत्वे कारणवताम्। कारणत्वं चान्यत्र पारिमाण्डल्यपरममहत्त्वान्त्यावयविगतरूपरसगन्धस्पर्शपरिमाणद्विपृथक्त्वादिपरत्वापरत्वविनश्यदवस्थद्रव्यगतसंयोग-

---

[1] कन्दलीकाराः [2] इहापवर्गहेतुनिरूपणस्याप्रकृतत्वादिति भावः
[3] साधनत्वेन विवक्षितत्वादित्यर्थः। यद्वा विशेषणतयाऽविवक्षितत्वादिति च्छेदः

विभागवेगकर्मान्त्यशब्दचरमसंस्कारज्ञानेभ्यः, अत्र कारणत्वं ज्ञानेतरकार्यं प्रति विवक्षितम् ; अन्यथा सामान्यादीनां ज्ञाननिमित्तत्वात् द्रव्यादीनां त्रयाणां ग्रहणं न स्यात् ॥

पारिमाण्डल्यं परमाणुपरिमाणं । समवायिकारणवत्ता अन्यत्र नित्यद्रव्यनित्यगुणेभ्यः । आद्यसंयोगविभागसंस्कारविशेषनित्यद्रव्यनित्यगुणान् विहाय गुणसमवायिकारणकत्वम् । सामान्यादीनां त्रयाणां जातिरहितत्वं; बुद्ध्येकलिङ्गत्वम्, अनादित्वम्, अनात्मधर्मकार्यापेक्षया अकारणत्वम्, कालानवच्छिन्नत्वम्, अर्थशब्दानभिधेयत्वम्, कारणानपेक्षत्वम् । अन्त्यविशेषान् विहाय अनित्यधर्मत्वम् । कार्यं विहाय द्रव्यादीनां पञ्चानां नित्यत्वम् । द्रव्यादीनां चतुर्णामेवायोगिप्रत्यक्षत्वम् । असमवायिकारणत्वं गुणकर्मणोरेव । नित्यद्रव्यसमवाययो[1]रसमवेतत्वम् । द्रव्याणां नवानामेव साधर्म्यं द्रव्यत्वजातिसमवायित्वम् ॥

ननु—द्रव्यत्वजातिसमवाय एव नास्ति, तन्मानाभावात् । अनुगतप्रत्ययस्तु समवायिकारणत्वगुणवत्त्वोपाध्यनुगमादिति चेन्न । व्यक्तिविशेषाणां जातिव्यञ्जकत्वस्वाभाव्यात् । द्रव्येषु अनुगतप्रत्ययभावाच्च । जातिबाधकाद्धि औपाधिकत्वकल्पनया जात्यपलापः । तद्बाधकञ्चैकव्यक्त्यादि ॥

यथाहोदयनः—

"व्यक्तेरभेदस्तुल्यत्वं सङ्करोऽथानवस्थितिः ॥
रूपहानिरसम्बन्धो जातिबाधकसङ्ग्रहः" इति ॥ (किर-1-1)

न चात्रैकव्यक्तिता आकाशत्ववत्, नापि तुल्यव्यक्तिता कुम्भत्वकलशत्ववत् । नापि सङ्करः परस्परव्यभिचारिणोरेकत्र स्थितिः दण्डित्वकुण्डलित्ववत् । नाप्यनवस्थितिः जातित्ववत् । नाप्यागन्तुकत्वेन स्वरूपहानिः पाचकत्ववत् । नापि सम्बन्धाभावः समवायत्ववत्, तस्मात् बाधकाभावात् न द्रव्यत्वजात्यपलापसम्भवः । तत्सम्भवे च गोत्वाद्यपलापप्रसङ्गात् । अतोऽस्ति पृथिव्यादीनां नवानां द्रव्यत्वजातिसमवायित्वं समवायिकारणत्वं गुणवत्त्वञ्च ।

अन्त्यविशेषवत्त्वानाश्रितत्वे अन्यत्रावयविभ्यः पृथिव्युदकज्वलनपवनात्ममनसां बहुत्वपृथिवीत्वाद्यपरजातिमत्त्वसंस्कारवत्त्वानि क्षितिजलज्योतिरनिलमनसां क्रियावत्त्वमूर्तत्वपरत्वापरत्ववेगवत्त्वानि । आकाशकालदिगात्मनां परममहत्त्वसर्वगतत्वे, क्रियापरत्वापरत्ववेगरहितत्वानि । पृथिव्यादीनां पञ्चानां भूतत्वमौपाधिको धर्मः उपाधिश्च बाह्येन्द्रियग्राह्यविशेषगुणजातीयत्त्वम् । परमाणुगुणसङ्ग्रहार्थं जातीयग्रहणम् ॥

अथ भूतत्वं जातिः किं न स्यात् ? नियतव्यञ्जकाभावादिति ब्रूमः । उक्तोपाधिरेव तद्व्यञ्जक इति चेन्न, मूर्तत्वमप्येवं जातिः स्यात् परिच्छिन्नपरिमाणाश्रयत्वस्य तद्व्यञ्जकताश्रयणात् । तदपि जातिरस्त्विति चेन्न । भूतत्वमूर्तत्वयोः पृथिव्यादौ सङ्करप्रसङ्गात् । तस्मात् भूतत्वमौपाधिकं साधर्म्यं पृथिव्यादेः । इन्द्रियाश्रयत्वं च ; द्रव्यानारम्भकत्वेऽप्याकाशस्य श्रोत्राश्रयता न विरुध्यते । अवच्छिन्नस्यानवच्छिन्नाश्रयत्वात् । बाह्यैकेन्द्रियग्राह्यगुणवत्त्वं बाह्येन्द्रियग्राह्यविशेषगुणवत्त्वं च ।

---

[1] A. योरेवास—

चतुर्णां पृथिव्यादीनां द्रव्यसमवायिकारणत्वस्पर्शवत्त्वावान्तराणुत्वमहत्त्वस्थितस्थापकसंस्कारवत्त्वशरीरेन्द्रियारम्भकत्वानि । पृथिव्यादीनां त्रयाणां बाह्येन्द्रियग्राह्यत्वरूपवत्त्वद्रव्यत्वानि । पृथिव्युदकयोः गुरुत्वरसवत्त्वपतनवत्त्वालोकप्रकाश्यत्वाभास्वररूपवत्त्वानि । भूतात्मनां विशेषगुणवत्त्वं प्रत्यक्षगुणवत्त्वं च, क्षित्युदकानीश्वरात्मनां चतुर्दशसंख्येयगुणवत्त्वम् । आकाशानीश्वरात्मनामेकदेशवृत्तिविशेषगुणवत्त्वक्षणिकविशेषगुणवत्त्वे । दिक्कालयोः संख्यापरिमाणपृथक्त्वसंयोगविभागमात्रगुणवत्त्वं, सर्वोत्पत्तिमन्निमित्तकारणत्वं च स्वसमवेतद्वित्वपृथक्त्वादिसंयोगविभागवर्जम्, परत्वापरत्वानुमेयत्वं च । क्षितितेजसोः नैमित्तिकद्रवत्वम् । एवमुक्तसाधर्म्यमेव विपर्ययात् वैधर्म्यं, वैधर्म्यं च विपर्ययात् साधर्म्यम् । अथवा साधर्म्यविपर्यय एव वैधर्म्यं, वैधर्म्यविपर्यय एव साधर्म्यम् ॥

तद्यथोक्तम्—जलभूम्योः साधर्म्यं गुरुत्वं रसवत्त्वं च ; तद्विपर्ययादितरेभ्यो वैधर्म्यं तद्विपर्यय एव चेतरेषां तेजःप्रभृतीनां साधर्म्यं अगुरुत्वं नीरसत्वं च। तथा गन्धवती पृथिवीति वक्ष्यमाणं वैधर्म्यं तद्विपर्ययान्निर्गन्धत्वमबादीनां साधर्म्यम् । एवमात्मानं विहाय परार्थत्वमचेतनत्वं च । मनो विहायानन्तः करणत्वमनष्टगुणत्वं च । तच्चेश्वरस्याष्टगुणत्वेऽपि न विरुध्यते; द्रव्यजातीयसाधर्म्याभिधानात् । अम्भो विहाय निः स्नेहत्वमक्लेदत्वं च । तेजो विहायानुष्णत्वमदाहकत्वं च जलज्योतिरनिलानामपाकजस्पर्शवत्त्वम् जलज्योतिषोरपाकजरूपवत्त्वम् । दिक्कालमनसां विशेषगुणराहित्यम् । वाय्वाकाशदिक्कालमनसामतीन्द्रियत्वम्, आत्ममनसोः शरीरावच्छेदेन वृत्तिलाभः । वाय्वादीनां नीरूपत्वम्, आकाशादीनां स्पर्शशून्यत्वम्, कालादीनां अमूतत्वमित्याद्यन्यदप्यूहनीयम् ॥

यद्यपि साधर्म्यमेव वैधर्म्यमित्युक्तं, तथापि न तेन व्यतिरेकव्याप्त्यादि सम्यक् सिध्यति । अतः प्रत्येकं वैधर्म्यमुच्यते ॥

पृथिवीत्वसमवायः पृथिवीलक्षणम् ।

ननु लक्षणं केवलव्यतिरेक्यनुमानं तच्च पृथिवीस्वरूपसिद्धावसिद्धौ च न संभवेत ; आद्ये सिद्धसाधनत्वात् ; द्वितीये स्वाश्रयासिद्धेः ; न, स्वरूपस्य लोकतः सिद्धौ तद्व्यवच्छेदस्यैव साध्यत्वात् । तथाहि—पृथिवी अबादिभ्यो भिद्यते, पृथिवीत्वादबादिवत् इति व्यतिरेकी । तथाप्यप्रसिद्धविशेषणः पक्ष इति चेन्न ; इतरेभ्यो व्यावृत्तेर्घटादेरेव प्रत्यक्षसिद्धत्वात् । तर्हि किमनुमानेन ; परमाण्वादिभूगोलकान्तसमुदायस्य इतरेभ्यो व्यवृत्तिसिद्धिरिति ब्रूमः । व्यवहारो वा साध्यः— विमतं पृथिवीति व्यवहर्तव्यम्, पृथिवीत्वादिति व्यतिरेकी । न चाप्रसिद्धविशेषणता पक्षस्य,पृथिवीव्यवहारस्य संमुग्धस्य लोकत एव सिद्धेः । धर्मिविशेषेऽसिद्धस्य साध्यत्वान्नानुमानवैयर्थ्यम् । अतः पृथिव्यादेः पृथिवीत्वं वैधर्म्यं सिद्धम् । गुणास्तु तस्याः रूपरसगन्धस्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वगुरुत्वद्रवत्वसंस्काराः । एतेन द्रव्यत्वं पृथिव्या व्यवस्थापितं भवति, गुणवत्त्वस्य द्रव्यलक्षणत्वात् । तथा पृथिवीत्वमपि क्षितेर्गन्धवत्त्वेन व्यवस्थापितम् । अतो गन्धवत्त्वमपि वैधर्म्यं तस्याः । यस्तु—जलादिषु गन्धोपलम्भः स कुसुमादिसन्निकर्षनिमित्तस्तदभावे ऽभावनियमात् । एवं रूपरसस्पर्शा विशेषगुणा अपि क्षितेर्वैधर्म्यम् ॥ ननु—रूपादयोऽन्यत्रापि विद्यन्ते कथं विशेषगुणाः, कथं च वैधर्म्यं ; न, पाकजत्वेन नियतत्वात् ॥

यत्तूदयनेन चित्रत्वतारतम्याभ्यां विशिष्टं रूपादि व्यावर्तकमुक्तम्, तत्राव्याप्तिः, यतः पयः पाण्डुरा एव क्वचित भूमयो दृश्यन्ते ; तथारसस्पर्शयोरपि क्वचिदेकरूपतादर्शनात ॥

यत्तु पाकजरूपादिमत्त्वानुक्रमेणानेकविधरूपादिमत्त्वम्; तदसत्, पाके हि सति पूर्वद्रव्यस्य नाशाश्रयणात्। तस्मात् पाकजत्वेनैव विशेषगुणता, वैधर्म्यं च ॥

तत्र गन्धो द्विविधः सुरभिरसुरभिश्च। तत्र सौरभ्यादिविशेषवत्त्वेऽपि गन्धस्य नाव्याप्तिः, गन्धरूपेण क्षितावक्षतत्वात्। रसस्यावान्तरमाधुर्यादिभेदेन षड्विधत्वेऽपि नाव्याप्तिः, पाकजरसत्वेन व्याप्तेः। एवं स्पर्शस्यापि द्रष्टव्यम्।

सा च पृथिवी द्विविधा, नित्या अनित्या च। नित्या परमाणुरूपा। अनित्या तु कार्यलक्षणा। तच्च कार्यं त्रिविधम्, शरीरेन्द्रियविषयसंज्ञकम्। न च जातिनिबन्धनेयं संज्ञा। न हि तावत् शरीरत्वमिन्द्रियत्वं वा जातिरस्ति, पृथिवीत्वेन परापरभावाभावात्। विषयत्वमपि न जातिः; जातिरहितेऽपि सामान्यादौ भावात्। तस्मादात्मनोऽवच्छेदकतया भोगसाधनमन्त्यावयवि शरीरम्। शरीरसंयुक्तमतीन्द्रियं साक्षात् प्रतीतिसाधनमिन्द्रियम्। प्रतीयमानतया भोगसाधनं विषय इति नैमित्तिकी संज्ञा। तत्र शरीरं द्विपदादि प्रसिद्धम्। इन्द्रियं गन्धव्यञ्जकं घ्राणाख्यम्। अन्नादयो विषयाः।

अप्त्वमपां वैधर्म्यम्। तद्गुणास्तु रूपरसस्पर्शद्रवत्वस्नेहसङ्ख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्व-गुरुत्वसंस्काराः। शुक्लमधुरशीता एव रूपरसस्पर्शाः। स्नेहोऽम्भस्येव। तथा सांसिद्धिकं च द्रवत्वमिति विशेष-गुणत्वात् व्यावर्तकत्वमेषाम्। कथं तर्हि स्नेहादिमतां पार्थिवत्वं घृततैलक्षीराणाम्। पार्थिवत्वे च तेषां कथं स्नेहवत्त्व-सम्भवः, तैलक्षीरयोश्च सांसिद्धिकद्रवत्वं न स्यात्; उच्यते। पार्थिवत्वं तावत् तैलादेर्भौमाग्नीन्धनत्वात् सिद्धम्। दुग्ध-स्यापीन्धनता पिण्डीभूतस्य दृश्यते। पार्थिवत्वेऽपि घृतादीनां स्नेहवत्ता स्नेहवदम्भोऽवयवोपष्टम्भादविरुद्धा। अपामपि द्वैविध्यम् कार्यत्रैविध्यञ्च पूर्ववत्। शरीरं त्वयोनिजं; शुक्लशोणितयोः पार्थिवशरीरारम्भकयोरभावेऽपि अम्भोऽवयवैर-दृष्टवशात् पार्थिवावयवोपष्टब्धैरारभ्यते। भोगक्षमश्च भवति। तच्च वरुणलोकस्थमागमैकगम्यम्। इन्द्रियं रसव्यञ्जकं रसनं केवलांम्भोवयवैर्यावदारभ्यते। कार्यं च समुद्रादि प्रसिद्धम् ॥

तेजसो वैधर्म्यम् तेजस्त्वम्। तद्गुणाः रूपस्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वद्रवत्वसंस्काराः। तत्र तेजसोऽपरं वैधर्म्यम् शुक्लभास्वररूपवत्त्वम्; भास्वरत्वं जातिविशेषो रूपान्तरप्रकाशकत्वव्यङ्ग्यः अतो भास्वर-रूपस्य विशेषगुणता, स्वरूपतस्तु तच्छुक्लमेव तदन्यथात्वं हीन्धनसङ्गनिमित्तं, तदभावे चन्द्रतारकादेः शौक्ल्यस्यैव दर्शनात्। स्पर्शोऽप्यौष्ण्यविशिष्टो वैधर्म्यम्। न च चन्द्रादौ तादृशस्पर्शाभावात् अव्याप्तिः; तत्रापि तेजस्त्वलिङ्गेन तत्सद्भावानुमानात्, तदनुपलम्भोऽप्यंभोगततेजोरूपवदनभिव्यक्तेरेव, न त्वसत्वात्। तेजसो द्वैविध्यादि पूर्ववत्। शरीरं तैजसं सूर्यलोके; भोगसाधनत्वं च तस्य पूर्ववत्। चक्षुरिन्द्रियं तैजसं रूपव्यञ्जकत्वात् दीपवत् ॥

ननु नैतत्तैजसम्। तैजसं हि अधिष्ठानसंसृष्ट एवार्थे कार्यकरम् यथाग्नेः स्पर्शः; चक्षुः पुनः न तथा दूरदेशे ध्रुवादौ स्फटिकाद्यन्तरिते च घटादौ ग्रहणकारणत्वात्; अतोऽतैजसं चक्षुरप्राप्यकारित्वात्। उच्यते। न तावदधिष्ठानसंसृष्ट एवार्थे तैजसं कार्यकारि दीपप्रभायामनैकान्त्यात्; दीपप्रभा हि दीपकलिकाऽसंसृष्टेऽपि कार्यकारी दृश्यते, अतः प्राप्ते कार्यकरं चक्षुः; ध्रुवादिप्राप्तिश्च चक्षुषः सौरकिरणवदतिशीघ्रं दूरपातित्वात् उपपद्यते।

स्फटिकस्य चाप्रतिघातिताऽतिस्वच्छत्वात्तोयवत् । अप्राप्यकारित्वाङ्गीकारे तु कुड्यादिव्यवहितं सर्वदिगवस्थितं च युगपदवभासेताविशेषात् । तस्मात् प्राप्यकारीणीन्द्रियाणीत्यास्थेयम् ॥

विषयरूपं तेजश्चतुर्विधम् भौमं दिव्यमौदर्यमाकरजं च । भौमं प्रसिद्धम्. दिव्यं सौरविद्युदादि । अशितपीतपरिणामहेतुः औदर्यम् – आकरजं सुवर्णरजतताम्रादि ॥ यथाहोदयनः— आदिग्रहणाद्रजतताम्रकांस्याद्यष्टकमिति ॥

ननु सुवर्णादि पार्थिवं न्याय्यं नैमित्तिकद्रवत्वात् घृतवत्; न, विपक्षे बाधाभावात् । सुवर्णादि न पार्थिवं पाकानिवर्त्यरूपवत्त्वात्तोयवदिति सत्प्रतिपक्षत्वाच्च । तैजसत्वे च प्रयोगः–सुवर्णादि तैजसम् असांसिद्धिकद्रवत्वे सति जात्युपाधावेकविधरूपत्वात् दीपवत् । अपाकनिक्षिप्तैककुम्भव्यक्त्या व्यभिचारो माभूदिति जात्युपाधावित्युक्तम् । तस्मात् सूक्तं सुवर्णादि तैजसमिति ॥

वायोर्वायुत्वसमवायो वैधर्म्यम् । तद्गुणाश्च स्पर्शसङ्ख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वसंस्काराः । स्पर्शोऽस्यानुष्णाशीतत्वे सत्यपाकजः । अतोऽस्य विशेषगुणत्वात् तद्वत्त्वं वैधर्म्यान्तरम् । द्वैविध्यम् पूर्ववत् । कार्यं चतुर्विधम् शरीरेन्द्रियप्राणविषयभेदैः । तत्र शरीरं मरुतां लोके । भोगक्षमताऽपि भूतान्तरोपष्टम्भात् । इन्द्रियं स्पर्शनाख्यम् । विषयस्तूपलभ्यमानस्पर्शाधारोऽतीन्द्रियः स्पर्शशब्दधृतिकम्पलिङ्गगम्यस्तिर्यग्गमनस्वभावो मेघादिधारणप्रेरणसमर्थः ॥

ननु प्रत्यक्षो वायुः ; तथा च प्रयोगः—

वायुः प्रत्यक्षो गृह्यमाणस्पर्शाधिष्ठानत्वात् घटवत् इति ॥ वायुरप्रत्यक्षः अप्रत्यक्षगतित्वात् परोक्षसंङ्ख्यावत्त्वाद्वा मनोवदिति सत्प्रतिपक्षतेति चेत ; न, आद्यस्यादित्येन व्यभिचारात; द्वितीयस्यापि दूरस्थैः वृक्षैः । तस्माद्वायुः प्रत्यक्ष इति चेन्न । तस्य स्पर्शनगम्यत्वे तत्सङ्ख्यादेः स्पर्शनगम्यताप्रसङ्गात् । गृह्यमाणस्पर्शाधिष्ठानता तु तोयस्थवह्निना व्यभिचरति तस्माद्वायुर्न प्रत्यक्षः । तदयं प्रयोगः—वायुर्नास्मत्स्पर्शनगम्यः अस्मत्स्पर्शनागम्यसंङ्ख्यादिमत्त्वात् दीपप्रभावत् । तस्याप्रत्यक्षत्वेऽपि स्पर्शवत्त्वलिङ्गेन नानात्वमनुमेयम् । प्राणस्त्वन्तः शरीरे रसमलरुधिरादिधातुप्रेरणहेतुः एक एव सन् मुखनासिकासञ्चरणादिवृत्तिभेदात् पञ्चधा प्राणादिभेदेन भिद्यते । एवं पृथिव्यादिमहाभूतचतुष्टयं नित्यं कार्यं चोक्तम् ॥

तत्र कार्याणां प्रलयसृष्टिक्रमोऽभिधीयते । तथा हि–ईश्वरेच्छादृष्टवशात् अणुषु द्व्यणुकादिक्रमेण परम्परया सर्वकार्यारम्भकेषु आत्माणुसंयोगात् आद्यं कर्मोपजायते । ततो विभागात् द्व्यणुकारम्भकसंयोगनाशः । तस्मात् द्व्यणुकादेरान्त्यावयविनः सर्वस्य क्रमेण नाश इति प्रलयः । तत्र चतुर्विधाः परमाणवो विभक्ताः अवतिष्ठन्ते । आत्मानश्च संस्कारादृष्टोपरञ्जिताः । अन्योऽपि नित्यवर्गः । अनित्येष्वपि पाकजाः परमाणुगुणाः । अथ सिसृक्षोः महेश्वरस्येच्छावशात् अदृष्टोपष्टब्धादात्माणुसंयोगादणुषु कर्मोत्पद्यते । ततोऽणुषु परस्परं संयोगाः, तत्र तोयपरमाणुभ्यः समवायिकारणेभ्यस्तत्संयोगासमवायिकारणेभ्योऽदृष्टादिनिमित्तकारणेभ्यश्च द्व्यणुकादिक्रमेण महान् जलराशिरुत्पद्यते ॥ तत्र तेजः परमाणुभ्योऽप्यन्तरोपष्टब्धेभ्योऽण्डं महज्जायते । तत्र पार्थिवपरमाणुभ्य तथैव महती पृथिवी वायुपरमाणुभ्यश्च महान् वायुः । एवं शरीराद्यपि प्राणिनां द्व्यणुकादिक्रमेणोत्पद्यत इति सृष्टिः संक्षेपेणोक्ता ॥

आकाशस्य त्वेकत्वादाकाशत्वस्य जातित्वाभावात् न तद्वत्त्वं वैधर्म्यम् । 'आकाशं' इति संज्ञा च डित्थादिसंज्ञावत् पारिभाषिकी । तद्गुणाः शब्दसङ्ख्यापरिमाणपृथक्त्वसंयोगविभागाः । तत्र शब्दस्य परिशेषात् आगमाच्चाकाशैकगुणत्वम् । अतस्तद्वत्त्वं आकाशस्य वैधर्म्यम् ।

ननु शब्दो द्रव्यं परिमाणवत्त्वात् कुम्भवत् । न । आगमबाधात् हेत्वसिद्धेश्च । अतो न द्रव्यं शब्दो मानाभावात् । शब्दस्य गुणत्वे तावत् 'तस्य शब्दो गुणो मत' इत्यागमो मानम् । प्रयोगश्च-शब्दो विशेषगुणः, अस्पर्शत्वे सति बाह्यैकेन्द्रियग्राह्यसामान्यवत्त्वात् रूपवत् । प्रभाव्यावृत्त्यर्थमस्पर्शवत्त्वे सतीत्युक्तम् । तत्संयोगव्यावृत्त्यर्थं चैकेन्द्रियग्राह्यसामान्यवत्त्वम् । आकाशसिद्धिस्तु परिशेषाच्छब्दाधिकरणतया वक्ष्यते । चाक्षुषमाकाशं लोकप्रसिद्धमिति चेन्न ; तथात्वे मानाभावात् । आकाशः अचाक्षुषः द्रव्यत्वे सति रूपरहितत्वादात्मवदिति प्रयोगसंभवाच्च । यस्तु इह 'पक्षीप्लवत' इति प्रत्ययः स प्रभामण्डलापेक्षया न विरुद्ध्यते ॥

कथं तर्हि परिशेषादाकाशसिद्धिः ? उच्यते । शब्दस्तावत् विशेषगुण इति साधितम् । नचासौ स्पर्शवद्विशेषगुणः, प्रत्यक्षत्वे सत्ययावद्द्रव्यभावित्वात् । नाप्यात्मगुणः, बहिरिन्द्रियग्राह्यत्वात् । दिक्कालमनोगुणतापि शब्दस्य विशेषगुणत्वात् न संभवति । अतो गुणस्यास्य यदधिकरणं तदाकाशमिति तत्सिद्धिः । तस्य चैकत्वात् द्रव्यानारम्भकत्वेऽपि कर्णकोटरावच्छिन्नतया श्रोत्रेन्द्रियमौपाधिको विकारः ।

कालस्याप्येकत्वात् आकाशवदपरजात्यभावात् पारिभाषिकी काल इति संज्ञा । वैधर्म्यं तु परत्वादिप्रत्ययलिङ्गगम्यत्वम् । तथा हि— दिक्कृतपरत्वापरत्ववैपरीत्येन स्थविरशिशुशरीरस्थयोः परत्वापरत्वयोःअसमवायिकारणं तपनपरिस्पन्दविशेषावच्छिन्नद्रव्यसंबन्धः । अतस्तद्द्रव्यं परत्वादिप्रत्ययनिमित्तमिति तत्प्रत्ययलिङ्गगम्यम् । एवं यौगपद्यायौगपद्यचिरक्षिप्रप्रत्ययलिङ्गता द्रष्टव्या । यदेषां प्रत्ययानां असाधारणं निमित्तं, स काल इति लक्षणम् । सर्वकार्याणां उत्पत्तिस्थितिप्रलयहेतुः, क्षणादिमहाप्रलयान्तव्यवहारस्य च कारणम् । तस्य गुणाः संख्यापरिमाणपृथक्त्वसंयोगविभागाः । गुणवत्त्वान्निरवयद्रव्यत्वाल्लिङ्गाविशेषा[1]दाकाशवत् द्रव्यत्वनित्यत्वैकत्वानि । नानात्वमौपाधिकम् ।

दिशोऽपि कालवत् पारिभाषिकी संज्ञा दिगिति । वैधर्म्यं तु परत्वापरत्वपूर्वापरादिप्रत्ययलिङ्गत्वम् । अस्ति एकमूर्तमवधिं कृत्वा मूर्तान्तरे अबाधितः परत्वादिविषयः प्रत्ययस्तद्विषयस्य च दिक्कारणकता गुणविचारे वक्ष्यते । लिङ्गाविशेषात् कालवदेकत्वेऽपि दिशः औपाधिकाः प्राच्यादयो दश भेदाः । औपचारिकाः प्राच्यादयो भेदा इत्युदयनः ।

तदसत् । अन्यधर्मो हि अन्यत्रोपचर्यते । यथाग्नित्वं माणवके । न चान्याः सन्ति प्राच्यादयः । तस्मात् प्राङस्यां प्रथममस्यां सविताञ्चतीति प्राची । अवाङस्यां सविताञ्चतीत्यवाची । प्रत्यगस्यामञ्चतीति प्रतीची । उदगस्या-

---

[1] परत्वादिप्रत्ययलिङ्गस्य सर्वत्राविशेषेण कालसाधकत्वात् एकेनैव तत्सिद्धौ अतिरिक्तकालकल्पनायां गौरवात् तदेकत्वमित्यर्थः ।

मञ्चतीति उदीची । एवं प्रागवाङ्स्थामञ्चतीति प्रागवाची इत्याद्यौपाधिका एव दिशो भेदाः । तासामेव प्राच्यादीनामिन्द्रादिपरिग्रहादैन्द्रीत्यादिका संज्ञा । तस्यास्तु गुणाः संख्यापरिमाणपृथक्त्वसंयोगविभागाः ।

आत्मत्वापरजातिमत्त्वमात्मनो वैधर्म्यम् । तथाह्यस्य लक्षणम् । आत्मा इतरेभ्यो भिद्यते, आत्मत्वात् देहवदिति व्यतिरेकिरूपम् ।

ननु देह एवात्मा 'अहं कृष्ण' इत्यध्यक्षतो विलक्षणः सिद्धः । तत्र किमनुमानेन; तदतिरिक्तस्य आत्मनोऽसिद्धेराश्रयासिद्धिः ; न, संमुग्धप्रसिद्धिसिद्धस्य वैलक्षण्यानुमानोपपत्तेः । प्रत्यक्षतः कृशोऽहमिति देह एव विलक्षण आत्मा सिद्धः ; अतः कथं समुग्धा तत्सिद्धिरिति चेत्, न, देहस्याचेतनत्वात् । तथा हि - देहोऽचेतनः पार्थिवत्वात् कुम्भवदिति प्रयोगाद्देहस्यानात्मत्वं सिद्धम् । न च देहविषयाहंप्रत्ययबाधः, तस्य प्रमात्वासिद्धेः । नानुमानमपि मानमिति चेन्न ; प्रतिज्ञामात्रत्वात् ; हेत्वभिधाने चानुमानाप्रतिषेधात् । प्राणादेश्चक्षुरादेश्चानात्मत्वं भौतिकत्वात्करणत्वाच्च द्रष्टव्यम् । मनसोऽप्यनात्मत्वं करणत्वादेव । चक्षुरादीनां च रूपादिसंवित्करणत्वेन सिद्धौ करणप्रेरयिताऽऽत्मा करणादिविलक्षणः सारथिवदास्थेयः । देहेऽहमिति मतिस्तु देहस्यात्मत्वाप्तत्वादविरुद्धा । अतो निर्विघ्नं देहादिविलक्षणस्यात्मनः पृथिव्यादिवैलक्षण्यं लक्षणेन साध्यते । तस्य गुणाः बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मसंस्कारसंख्यापरिमाणपृथक्त्वसंयोगविभागाः । ईश्वरस्य तु ज्ञानेच्छाप्रयत्नसंख्यापरिमाणपृथक्त्वसंयोगविभागा एव गुणाः । बुद्ध्यादीनामसाधारण्यात् तद्वत्त्वमप्यात्मनो वैधर्म्यम् ।

मनसो वैधर्म्यं मनस्त्वापरजातिसमवायः ।

ननु मन एवासिद्धं कथं मनस्त्वेन तद्व्यावृत्तिसिद्धिः । न । आत्मेन्द्रियार्थसान्निध्ये सत्यपि कदाचिदेव जायमानं विज्ञानं कारणान्तरसापेक्षमिति तत्सिद्धिः । अदृष्टमेव कारणान्तरं कल्प्यतामिति चेन्न ; तस्य दृष्टसंपादकत्वात् ; अन्यथा दृढदण्डनुन्नमपि चक्रं कदाचिन्न भ्राम्येत । तथा स्मृतिः शरीरावच्छिन्नात्मसंयुक्तद्रव्यसाध्या, प्राणिविशेषगुणत्वात् रूपज्ञानवत् । श्रोत्रादि तत् स्यादिति चेन्न ; श्रोत्राद्यभावेऽपि स्मृतिदर्शनात् । यत्तु सुखादिसंवित् इन्द्रियसाध्या, साक्षात्कारित्वादित्युदयनेनोक्तम् । तदसत् । अस्मदादिसंविद्विवक्षायामीश्वरज्ञाने व्यभिचारात् । तद्भागे च तस्मिन्नेव बाधितम् । विशेषणदानं च परस्य व्यर्थम् । स्वार्थं तदनुमानमिति चेत् ; न । ईश्वराद्याप्तोपदेशपरम्परया मनःसिद्धेस्तत्सिसाधयिषाऽसंभवात् । तस्य गुणाः संख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्ववेगाः । तत्परिमाणमणुत्वम् ; विभुत्वे युगपज्ज्ञानोत्पत्तिप्रसङ्गात् । मध्यमपरिमाणत्वे च मनसोऽनित्यत्वप्रसङ्गात् । न च तदनित्यम्, तन्मानाभावात् इति ।

द्रव्यपदार्थः समाप्तः ।

साधर्म्यवैधर्म्याभ्यां निरूपितानि द्रव्याणि । सम्प्रति ताभ्यां गुणा निरूप्यन्ते । तत्र रूपादीनां सर्वेषां गुणत्वजातिसमवायः साधर्म्यम् ; द्रव्यादिभ्यो व्यावर्तकत्वात् गुणलक्षणं च ।

ननु न गुणत्वं जातिरस्ति मानाभावात् ; न, अनुमानात् तत्सिद्धेः । तथा हि—गुणत्वं जातिः, जातिबाधकाविषयत्वे सति अनुगतव्यवहारासाधारणकारणत्वात् गोत्ववत् । दर्शितं हि जातिबाधकं व्यक्त्यभेदादि तद्विरहः गुणत्वे अतिविशदः ; अतो न विशेषणासिद्धिः । दूषणान्तरविरहोऽप्यतिरोहित इति गुणत्वजातिसिद्धिः । तथा सामान्योपाधौ सर्वद्रव्यवृत्तित्वं रूपादीनां साधर्म्यमितरेभ्यो वैधर्म्यं च । तेषां निष्क्रियत्वमगुणत्वं च साधर्म्यम् । यद्यपि निष्क्रियत्वादि कर्मादीनामप्यस्ति तथापि रूपादीनां साधर्म्यं न विरुध्यते ।

संप्रति गुणानां भागशः साधर्म्यं वैधर्म्यं चोच्यते । रूपरसगन्धस्पर्शपरत्वापरत्वगुरुत्वद्रवत्वस्नेहवेगस्थितिस्थापकाः मूर्तगुणाः । बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मभावनाशब्दाः अमूर्तगुणाः । संख्यापरिमाणपृथक्त्वसंयोगविभागा उभयगुणाः । संयोगविभागद्वित्वद्विपृथक्त्वादयोऽनेकाश्रिताः । गुणानां परस्परं साधर्म्यमुच्यते, न लक्षणमतो न कार्यद्रव्येणातिव्याप्तिः । रूपरसगन्धस्पर्शैकत्वैकपृथक्त्वपरिमाणपरत्वापरत्वगुरुत्वद्रवत्वस्नेहसंस्कारबुद्ध्यादिशब्दान्ता एकैकद्रव्यवृत्तयः । रूपरसगन्धस्पर्शस्नेहसांसिद्धिकद्रवत्वपरत्वापरत्वबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मभावनाशब्दा वैशेषिका गुणाः । किमिदं विशेषगुणत्वं? [1] स्वाश्रयव्यवच्छेदोचितावान्तरसामान्यविशेषवत्त्वमित्युदयनः ॥

न तल्लक्षणम् । स्वशब्दार्थानुगमाभावादव्याप्तेः । आश्रयव्यवच्छेदोचितावान्तरसामान्यवत्त्वं त्वतिव्यापकम् ; कर्मणोऽपि तथात्वात् । नाप्येकेन्द्रियग्राह्यत्वं ; प्रभयातिव्याप्तेः । गुणत्वेन विशेषणेऽपि प्रभासंयोगेन अतिव्याप्तिः । सत्यम् । तथापि गुणत्वापरजातिमत्तया नियतैकद्रव्यव्यवच्छेदकत्वमस्तु तल्लक्षणम् । गुणमात्रस्यापि द्रव्यव्यवच्छेदकत्वमस्तीति गुणत्वापरजातिमत्तयेत्युक्तम् । संयोगव्यावृत्त्यर्थमेकेति विशेषणम् । गुरुत्वव्यावृत्त्यर्थं नियतेति [2] । संख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वगुरुत्वनैमित्तिकद्रवत्ववेगस्थितस्थापकाः सामान्यगुणाः । शब्दस्पर्शरसरूपगन्धा बाह्यैकेन्द्रियग्राह्याः । संख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वद्रवत्वस्नेहवेगा द्वीन्द्रियग्राह्याः । बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नास्त्वन्तःकरणग्राह्याः । गुरुत्वधर्माधर्मभावनास्थितस्थापका अतीन्द्रियाः । अपाकजरूपरसगन्धस्पर्शपरिमाणैकत्वैकपृथक्त्वगुरुत्वद्रवत्वस्नेहवेगविशेषस्थितस्थापकोत्तरसंयोगविभागाः कारणगुणजन्याः, स्वाश्रयस्य यत्कारणं तद्गुणजन्याः । बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मभावनाशब्दाःअकारणगुणपूर्वा एव ॥

एवं हि नियमे संयोगविभागवेगनैमित्तिकद्रवत्वेभ्योऽकारणगुणपूर्वेभ्यो वैधर्म्यसिद्धिः । तेषां क्वचित्कारणगुणपूर्वकत्वात् । बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मभावनाशब्दविशेषतूलपरिमाणोत्तरसंयोगनैमित्तिकद्रवत्वपरत्वापरत्वपाकजाः संयोगासमवायिपूर्वकाः । आद्यसंयोगविभागवेगविशेषाः कर्मजाः । शब्दविशेषोत्तरविभागौ विभागजौ । परत्वापरत्वद्वित्वद्विपृथक्त्वादयोऽपेक्षाबुद्धिजाः । रूपरसगन्धानुष्णस्पर्शशब्दपरिमाणैकत्वैकपृथक्त्वस्नेहा असमवायिकारणत्वेन समानजातीयस्यैवारम्भकाः । सुखदुःखेच्छाद्वेषप्रयत्नाः विजातीयस्यैवारम्भकाः । पुत्रसुख-

---

[1] सत्तासाक्षाद्व्याप्यजात्यन्यरूपरसवृत्तिजातिमत्त्वमित्यर्थः ।

[2] अन्त्यविशेषेषु अतिप्रसङ्गवारणाय आद्यदलम् ।

दुःखयोः पितृसुखदुःखादिहेतुत्वात् नैवमिति चेन्न। तज्ज्ञानस्यैव तद्धेतुत्वात्, अन्यथास्वागामिपुत्रसुखादिज्ञानात् पितुः सुखादि न स्यात्। संयोगविभागसंख्यागुरुत्वद्रवत्वस्नेहोष्णस्पर्शज्ञानधर्माधर्मसंस्काराः समानासमानजातीयारम्भकाः। स्नेहस्य सङ्ग्रहः संयोगविशेषो विजातीयं कार्यम्। बुद्धिसुखदुःखेच्छाद्वेषभावनाशब्दाः स्वाश्रयसमवेतविशेषगुणारम्भकाः। रूपरसगन्धस्पर्शपरिमाणानां परत्रैवारम्भकत्वं संयोगविभागसंख्यैकपृथक्त्वगुरुत्वद्रवत्ववेगस्थितस्थापकधर्माधर्मस्नेहप्रयत्नास्तूभयत्रारम्भकाः॥

प्रयत्नः शरीरे यागादिक्रियां कुर्वन्नात्मनि धर्माधर्मनिमित्तम्। प्रयत्नाद्याश्रयो हि कर्ता कर्त्राश्रितं च धर्मादि। गुरुत्वद्रवत्ववेगस्थितस्थापकप्रयत्नधर्माधर्मस्नेहसंयोगविशेषाः क्रियाहेतवः। गन्धानुष्णस्पर्शसंख्यापरिमाणैकपृथक्त्वशब्दस्नेहानामेकाश्रितकार्यं प्रत्यसमवायिकारणत्वमेव। बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मभावनानां निमित्तकारणत्वमेव। संयोगविभागोष्णस्पर्शरूपरसगुरुत्वद्रवत्ववेगानामुभयथा कारणत्वम्। रूपस्य निमित्तता श्वेतमालभेतेति श्रुतिसिद्धा। रसस्यापि पुष्ट्यादिनिमित्तताऽन्वयव्यतिरेकसिद्धा। परत्वापरत्वद्वित्वद्विपृथक्त्वादीनां अकारणत्वम्। द्वित्वमप्यकारणमिति केचित्॥

तदसत्॥ द्वित्वस्य द्व्यणुकपरिमाणकारणत्वात्। संयोगविभागशब्दात्मविशेषगुणानां प्रदेशवृत्तित्वम्। रूपरसगन्धस्पर्शसंख्यापरिमाणपृथक्त्वगुरुत्वद्रवत्वस्नेहवेगस्थितस्थापकपरत्वापरत्वानामाश्रयव्यापित्वम्। अपाकजरूपरसगन्धस्पर्शपरिमाणैकत्वैकपृथक्त्वगुरुत्वद्रवत्वस्नेहानां यावद्द्रव्यभावित्वम्। पाकजरूपरसगन्धस्पर्शद्रवत्वपरत्वापरत्वपृथक्त्वादिशब्दबुध्यादिसंयोगविभागवेगस्थितस्थापकानां अयावद्द्रव्यभावित्वम्। रूपाद्येकैकत्यागेन रूपत्वादिरहितत्वम्। सांसिद्धिकद्रवत्वरूपरसगन्धस्पर्शस्नेहानां मूर्तविशेषगुणत्वम्, रूपरसगन्धस्पर्शस्नेहगुरुत्वद्रवत्वस्थितस्थापकानां स्पर्शव्याप्यत्वं स्नेहशैत्यसांसिद्धिकद्रवत्वानां जलमात्रवृत्तित्वम्। औष्ण्यभास्वरत्वयोस्तेजोमात्रवृत्तित्वम्। रसगुरुत्वयोः जलावनिगुणत्वम्। गन्धानेकजातीयरसरूपाणां पृथिवीमात्रवृत्तित्वं बुद्ध्यादीनां भावनान्तानां आत्मविशेषगुणत्वम्।

रूपद्रवत्वयोः पृथिव्यप्तेजोमात्रगुणत्वम्। नैमित्तिकद्रवत्वपार्थिवपरमाणुरूपादीनां पाकजत्वम्। सङ्ख्यापरिमाणप्रचयानामेव परिमाणकारणत्वम्, संयोगविभागशब्दानामेव शब्दकारणत्वं, स्पर्शगुरुत्वप्रयत्नवेगानामेवाभिघातहेतुत्वम्। एकत्वैकपृथक्त्वसंयोगविभागानामनेकाश्रितगुणारम्भकत्वम्; परत्वापरत्वयोरेव दिक्कालसंयोगजत्वम्। परत्वापरत्वचरमज्ञानद्वित्वद्विपृथक्त्वादीनामेव निमित्तविनाशविनाश्यत्वम्। तदन्येषामेव तु गुणान्तरविनाश्यत्वं, कार्यगुणानामेवाश्रयविनाशविनाश्यत्वम्। अपार्थिवपरमाणुरूपरसस्पर्शसांसिद्धिकद्रवत्वगुरुत्वस्नेहस्थितस्थापकनित्यद्रव्यैकत्वैकपृथक्त्वपरिमाणेश्वरबुद्धीच्छाप्रयत्नानां नित्यत्वाकार्यत्वे। इतरेषां गुणानामनित्यत्वकार्यत्वे इति।

अथ गुणानां प्रत्येकं वैधर्म्यमुच्यते--रूपादीनां रूपत्वाद्यपरसामान्यसम्बन्धो वैधर्म्यं रूपादिसंज्ञानिमित्तं च। चक्षुरादिनियतेन्द्रियग्राह्यत्वोपाधिकं रूपत्वादि; तेनौपाधिकीयं संज्ञेति चेन्न; चक्षुराद्युपाध्यग्रहे रूपाद्यग्रहप्रसङ्गात्; नहि पचिक्रियावगमं विना पाचकावगमः संभवी। रूपाद्यवगमनिबन्धनत्वात् चक्षुराद्यवगमस्य; अतो रूपत्वादि

जातिसंबन्धनिबन्धनैव रूपादिसंज्ञा। तथा विशेषगुणत्वे सति चक्षुषैव ग्राह्यत्वं रूपस्य वैधर्म्यम्। एतेन लक्षणं प्रमाणं चोक्तं भवति।

तच्च चक्षुःसहकारि; आलोकरूपसहकृतं हि चक्षुः रूपादि गृह्णाति; शुक्लाद्यनेकविधम्, क्षित्युदकतेजोमात्रवृत्ति, जलतेजः परमाणुषु नित्यम्, पार्थिवपरमाणुष्वग्निसंयोगजन्यं संयोगान्तरनाश्यं च। अवयविष्ववयवरूपजन्यमाश्रयनाशनाश्यं च।

रसस्यापि रसत्वसंबन्धो वैधर्म्यम्। गुणत्वे सति रसनग्राह्यो रस इति लक्षणम्। रसनप्रत्यक्षं च प्रमाणम्। रसनेन्द्रियसहकारी। तथात्वं चातिशुष्के रससंपर्कात् रसोपलब्धेरवसीयते। पृथिव्युदकमात्रवृत्ति; जीवनपुष्टिबलारोग्यतद्विपर्ययाणां च हेतुः मधुराम्ललवणतिक्तकटुकषायतत्तारतम्यभेदैः बहुधा भिन्नः। नित्यत्वानित्यत्वनिष्पत्तयोऽस्य रूपवद्द्रष्टव्याः।

गन्धस्य गन्धत्वजातिसम्बन्धो वैधर्म्यं, गुणत्वे सति घ्राणग्राह्यत्वं च लक्षणम्। घ्राणेन्द्रियसहकारित्वं घृतगन्धस्य घ्राणेन मृगमदगन्धाभिव्यक्तौ निमित्तत्वात्। सुरभित्वासुरभित्वजातिविशेषादवान्तरभेदः; पृथिवीमात्रवृत्तित्वं सर्वत्र चानित्यत्वम्। विनाशोत्पत्तितद्धेतवो रसस्येव॥

स्पर्शस्यापि तज्जातिमत्त्वं वैधर्म्यं, गुणत्वे सति त्वगिन्द्रियमात्रग्राह्यत्वं लक्षणम्। स च विशेषगुणत्वे सति क्षित्युदकज्वलनपवनवृत्तिः। स्थितस्थापकव्यावृत्त्यर्थं विशेषणम्। त्वगिन्द्रियसहकारी; वातस्पर्शस्य त्वगिन्द्रियेण शीतस्पर्शोपलब्धौ निमित्तत्वात्। विशेषगुणत्वे सति रूपव्यापकः। संख्यादिव्यावृत्त्यर्थं विशेषगुणत्वं विशेषणम्। शीतोष्णानुष्णाशीतत्वजातिभेदात् त्रिविधः। अस्यापि रसवन्नित्यत्वम्। उत्पत्तिविनाशतद्धेतवो रसस्येव॥

अथ पाकजप्रक्रिया संक्षेपेणोच्यते—आमपाकनिक्षिप्तस्य कुम्भादेरग्निसंयुक्तस्य परंपरया कारणभूतेषु परमाणुष्वग्न्यभिघातान्नोदनाद्वा कर्माणि जायन्ते। तेभ्यः कर्मभ्यो विभागाः, विभागेभ्यो द्रव्यारम्भकसंयोगनाशाः, तेभ्यो द्व्यणुकादिलक्षणकार्यनाशः। तदनन्तरं परमाणूनामग्निसंयोगादौष्ण्यापेक्षात् रूपरसगन्धस्पर्शानां नाशः। पुनरन्यस्मादग्निसंयोगादौष्ण्यापेक्षात् पाकजा रूपादयो जायन्ते। तदनन्तरमदृष्टापेक्षादात्माणुसंयोगादणुषु कर्मोत्पत्तौ तेषां परस्परं संयोगात् द्व्यणुकादिक्रमेण कार्यद्रव्याण्युत्पद्यन्ते। तेषु च कारणगुणपूर्वकतया क्रमेण रूपाद्युत्पत्तिः उत्पद्यमानाश्च द्व्यणुकादयः त्र्यणुकादिनाशानन्तरमेवोत्पद्यन्त इति नाभावोपलब्धिप्रसङ्गः। कुम्भादीनामाधाराधेयभावश्च न विरुध्यते इति पीलुपाकप्रक्रिया। अन्ये च नाग्निसंयोगादिक्रमेण द्व्यणुकादिनाशमिच्छन्ति, किन्तु परमाण्वादीनामन्त्यावयविपर्यन्ताग्निसंयोगेभ्यः पूर्वरूपादीनां नाशः संयोगान्तरेभ्यश्च तेष्वेव द्रव्येषु रूपादीनि गुणान्तराणि जायन्त इति पिठरपाकप्रक्रिया।

एकादिप्रत्ययस्य तद्व्यवहारस्य च हेतुः संख्येति संख्यावैधर्म्यं लक्षणं च। कुम्भाद्यभेदे एकत्वं द्वित्वादिश्च तद्भेदे इत्यतो न गुणनिबन्धनोऽयं व्यवहार इति भूषणः। तदसत्। घटस्वरूपाभेदनिबन्धनो ह्येक इति व्यवहारः पटे न स्यात्। द्वित्वस्य च स्वरूपभेदत्वे त्रित्वादिविशेषो न स्यात्। न हि स्वरूपमनुगतं, नापि तद्भेदे विशेषोऽस्ति।

तस्मादेकद्वित्रिचतुः पञ्चेत्यादि गणनाव्यवहारो गुणविशेषनिबन्धन एव। सच विशेषः संख्या। सा च द्विविधा—एकद्रव्या अनेकद्रव्या च। तत्रैकत्वजातिमत्येकत्वसंख्यैकद्रव्या। अस्याश्च नित्यत्वानित्यत्वनिष्पत्तयः सलिलतेजोरूपस्येव। द्वित्वादिका परार्धान्ता द्वित्वत्वादिजातिमत्यनेकद्रव्या। तस्याश्च पार्थिवरूपवदनित्यत्वमेव। तदुत्पत्तौ चाश्रयगतैकत्वे एकत्वानि ना असमवायिकारणं, तद्बुद्धिः निमित्तं, आश्रयद्रव्याणि समवायिकारणम्। निमित्तभूता च बुद्धिरपेक्षाबुद्धिरित्युच्यते। तन्नाशाच तत्कार्यद्वित्वादिनाशः। कुचिच्चाश्रयनाशादपि तन्नाश इति द्वित्वादिप्रक्रियासंक्षेपः॥

**परिमाणं** गुणत्वे सति मानव्यवहारकारणं इति परिमाणलक्षणवैधर्म्यप्रमाणानि परिमाणत्वजातियोगश्च लक्षणं वैधर्म्यं च। मानव्यवहारस्तु, हस्तवितस्त्यादिज्ञानं व्यवहारो वा पूर्ववत्। परिमाणं घटादिस्वरूपमात्रम्; अतोऽयं व्यवहारो न गुणनिबन्धन इति चेन्न। स्वरूपोपलब्धावपि हस्तवितस्त्यादिविशेषानुपलब्धेः। तत्तर्हि सामान्यं तद्विशेषास्तु तद्विशेषा इति चेन्न। द्रव्यत्वेन तुल्यव्यक्तित्वादतो मानविशेषाः न सामान्यविशेषाः। न च [1] पलसंख्याभ्यामतिव्याप्तिः, परिमाणस्य विलक्षणजातिमत्वात्। तच्चतुर्विधम्। अणुत्वमहत्त्वदीर्घत्वह्रस्वत्वभेदैः।

तत्राणुत्वं द्विविधम्। नित्यमनित्यं च। नित्यं परमाणुमनःसु; अनित्यं द्व्यणुक एव। त्र्यणुकादि पुनर्भाक्तम् महत्त्वमपि पूर्ववत् द्विविधम्। आकाशकालदिगात्मसु नित्यम्। त्र्यणुकादिष्वनित्यम्। दीर्घत्वह्रस्वत्वे पूर्ववत् द्विविधे महत्त्वाणुत्वैकार्थसमवेते। तत्रानित्यं चतु [2] र्विधम् संख्यापरिमाणप्रचयासमवायिकारणजन्यम्। तत्र परमाणुद्वये प्रातिस्विकैकत्वविषयामदृष्टोपष्टब्धामीश्वरबुद्धिमपेक्ष्योत्पन्ना द्वित्वसंख्या परिमाणुद्वयारब्धे द्व्यणुके अणुत्वह्रस्वत्वे जनयति समवाय्यसमवायिकारणाविशेषेऽपि कार्यभेदोऽदृष्टादिनिमित्तभेदात्। एवं द्व्यणुकादिषूत्पन्ना बहुत्वसंख्या द्व्यणुककार्ये त्र्यणुके महत्त्वदीर्घत्वे जनयति। तथा त्र्यणुकमहत्त्वदीर्घत्वाभ्यां तत्कार्ये महत्त्वदीर्घत्वे जायेते। प्रशिथिलः संयोगः प्रचयः ततो द्वितूलपिण्डारब्धे तूलपिण्डे प्रचयः महत्त्वं दीर्घत्वं च जायते। न च तत्र महत्त्वमेव कारणं, महत्त्वाविशेषेऽपि प्रचये सति कार्यमहत्त्वेतिशयदर्शनात्। एवं महत्त्वदीर्घत्वयोरपि कारणता कार्यातिशयदर्शनादवसेया। तेषां चतुर्णामपि आश्रयनाशादेव नाशः।

अन्यत्वादिव्यवहारासाधारणकारणं पृथक्त्वम्। अत्रापीदमेव वैधर्म्यादि। ननु अन्योन्याभावएव पृथक्त्वं, तस्य तदन्यत्वे मानाभावात्। अन्यथा च रूपं रसात्पृथगिति बुद्धिर्नस्यात्। न। पञ्चमीव्यवहारवैयर्थ्यप्रसङ्गात्। न हि कुम्भास्तम्भो न भवतीति व्यवहारोर्थवान्। गुणादिषु च पृथगिति प्रत्ययः स्वरूपभेदगुणयोगात् गौणः। तर्हि स्वरूपभेद एवास्तु पृथक्त्वमिति चेन्न। तस्य सावधित्वात्। न हि स्तम्भात् कुम्भ इति प्रत्ययः संभवति। तर्हि जातिरस्तु। न च सावधित्वानुपपत्तिः रूपादिपृथक्त्व इव स्वरूपभेदोपचारेणोपपत्तेः। न; द्रव्यत्वेन तुल्यव्यक्तित्वात्; तस्मात् पृथक्त्वं गुण एव। तत द्विविधम्। एकद्रव्यमनेकद्रव्यं च। आद्यमेकपृथक्त्वं द्विपृथक्त्वादि चेतरत्। एकत्वादिना समानाश्रयं पृथक्त्वमेकपृथक्त्वादि। तस्य नित्यत्वानित्यत्वनिष्पत्तयः संख्यावत् द्रष्टव्याः। पृथक्त्वस्य जातिमत्वेऽपि नैकपृथक्त्वादेः जातिरस्ति; एकपृथक्त्वाद्यनुगतबुद्धिस्त्वेकत्वादिना सहैकार्थसमवायोपाधित इति।

---

[1] A फल    [2] त्रिविधं A

संयोगः संयुक्तप्रत्ययस्यासाधारणं निमित्तमिति संयोगस्य वैधर्म्यं प्रमाणं च। स च द्रव्यगुणकर्मणां हेतुः। अतो नापलपनीयः, अन्यथा अवयवसंयोगं विनाप्यवयविनिष्पत्तिः स्यात्। तथा आत्ममनः संयोगं विना ज्ञानादिर्भवेत्। नोदनाभिघातौ च विना सर्वत्र कर्मोत्पत्तिः स्यात्। संयोगलक्षणं च विद्यमानयोरप्राप्तयोः प्राप्तिरिति। स च त्रिविधः। अन्यतरकर्मजः उभयकर्मजः संयोगजश्चेति। तत्राद्यः स्थाणौ श्येनेन, विभूनां मूर्तैर्वा; द्वितीयो मल्लयोर्मेषयोर्वा; तृतीयस्तु कारणसंयोगिभिरकारणैः कार्यस्य संयोगः। तथा हि— कारणाकारणसंयोगपूर्वकः कार्याकार्यसंयोगः। स चैकस्मात्संयोगात् द्वाभ्यां बहुभ्यश्च जायते। एकस्मात्तावत् तन्तुकेशसंयोगात् द्वितन्तुककेशसंयोगः, तथा तन्त्वोराकाशसंयोगाभ्यां द्वितन्तुकाकाशसंयोगः। तथा तन्तुभिस्तुरीसंयोगेभ्यश्च तुरीपटसंयोगः। तथा एकस्मादपि संयोगात् द्वौ संयोगौ जायेते। तथा हि-पार्थिवाप्यपरमाण्वोः संयोगे सति, तदा तयोः सजातीयाण्वन्तराभ्यां संयोगे पार्थिवाप्यद्व्यणुकद्वयमुत्पद्यते। तदनन्तरं पार्थिवाणुना आप्यद्व्यणुकस्य संयोगो जायेत। तथा आप्यपरमाणुना पार्थिवद्व्यणुकस्यापि संयोग उत्पद्यते। प्रमाणं चात्र प्रत्यक्षयोग्ये तावत् परिशेषः। तन्तुसंयुक्तं हि केशादि पटेन संयुक्तं दृश्यते। तत्र कर्मणोऽभावात् तन्तुकेशसंयोग एव कारणं सिद्धम्। अत उक्तविधपरमाणुद्व्यणुकसंयोगः कारणाकारणसंयोगारभ्यः अकर्मजत्वे सति संयोगत्वात् संप्रतिपन्नवदिति। न चाजः संयोगोऽस्ति, तन्मानाभावादिति नानैकान्तता ॥

यत्तूदयनेनोक्तम्——पार्थिवद्व्यणुकमाप्येन परमाणुना संयुज्यते, तदकार्यत्वे सति तत्संयोगिकार्यत्वात् यथा पटस्तुर्येति। तदसत्। दृष्टान्तस्य साध्यसाधनशून्यत्वात्। नाशस्तु सर्वसंयोगस्यैकार्थसमवेतद्विभागात्, क्वचिदाश्रयनाशात्। यदा हि संयुक्तं द्रव्यमक्रियमेवावयवक्रियाविभागादिक्रमेण नश्यति ततस्तदनन्तरं तन्नाशात्तदाश्रितसंयोगनाशः ॥

विभागस्य विभक्तव्यवहारासाधारणकारणता वैधर्म्यम्। प्रमाणं च 'इदमस्माद्विभक्तम्' इति प्रत्ययः। तच्छब्दव्यवहारश्च न रूपादिनिमित्तः संभवतीति परिशेषात् गमकः। तथा शब्दादिहेतुः विभागः शब्दादिनाऽवगन्तव्यः। वंशदलविभागात्तावच्छब्दोत्पत्तिः प्रसिद्धा। तथा कारणविभागात्[1] कार्यविनाशो जायते। लक्षणं तु संयोगघातको गुणो विभाग इति। संयोगनाश एव विभाग इति चेन्न; आश्रयनाशात् संयोगनाशे विभागबुद्ध्यभावात्। सतोः संयोगनाशो विभाग इति चेन्न। विभागस्य सावधितया प्रतीतेः। न ह्यभावः सावधितया प्रतीयते। स त्रिविधः। अन्यतरकर्मजः उभयकर्मजः विभागजश्चेति। तत्र द्वयोः संयोगवदुदाहरणम्। तृतीयस्तु द्विविधः, कारणमात्रविभागजः—कारणाकारणविभागजश्चेति।

तत्र कारणमात्रविभागजस्तावदेवं जायेत —— यदा हि पटावयवकर्म पटावयवान्तरात् विभागं जनयति, तदनन्तरं द्रव्यारम्भकसंयोगनाशः, ततः पटनाशः, तस्मादेव च विभागादाकाशादिदेशान्तरात् तदाश्रये विभागो जायत इति। सोऽपि कर्मज एव स्यादिति चेन्न, यद्धि कर्म द्रव्यानारम्भकसंयोगविरोधिविभागजनकं न तत् द्रव्यारम्भकसंयोगविरोधिविभागजनकमिति व्याप्तिः कमलमुकुलविकासकर्मणि निश्चिता।

---

[1] तयोः संयोगनाशे सति इति शेषः

तस्मादुक्तविधविभागजनकत्वं व्यापकं व्यावर्तमानं उक्तविधविभागजनकत्वं व्याप्यमादाय व्यावर्तते। अतः कारणमात्रविभागादेवायं विभागो जायते इति। इदमुदयनोक्तमप्यसारम्। सत्प्रतिपक्षत्वात्। तथा हि—विमतं कर्म उक्तविभागजनकं, कर्मत्वात्। स विभागो वा कर्मजन्यः, विभागत्वात् संप्रतिपन्नवत् इति चेन्न। विनश्यदवस्थकर्मणा व्यभिचारात्। आरम्भकत्वे सति अदोष इति चेन्न; विभागस्य हि कर्मैकजन्यत्वे तत्तुल्ययोगक्षेमस्य संयोगस्यापि तथात्वं स्यात्। तदप्यस्त्विति चेन्न। प्रागुक्तपार्थिवाप्यद्व्यणुकपरमाणुसंयोगयोराकस्मिकत्वप्रसङ्गात्, तदाश्रये कर्माभावात्। तस्मात् संयोगवद्विभागोऽपि न कर्मैकजन्यः। कारणाकारणविभागजविभागस्य तु संयोगजसंयोगस्येवोदाहरणं द्रष्टव्यम्। विनाशस्तु त्रिविधस्यापि विभागस्योत्तरसंयोगात्, क्वचिच्चाश्रयनाशात्, क्वचिदुभाभ्याम्। यत्र ह्यवयवक्रियाविभागादिक्रमेण द्रव्यनाशो द्रव्यान्तराद्विभागोत्पत्तिसमये जायते तत्रोत्तरसंयोगाभावादाश्रयनाशादेव विभागः कर्म च नश्यति। यत्र तु विभागोत्पत्त्यनन्तरं आश्रयनाशस्तत्र संयोगोऽपि विभागनाशकारणम्।

येन विशिष्टं द्रव्यं परमित्युच्यते जायते वा तत्परत्वमिति लक्षणं, प्रमाणं, वैधर्म्यं च परत्वस्य। एवमपरत्वस्यापि। संयुक्तसंयोगाल्पत्वभूयस्त्वयोरेवोक्तव्यवहारनिमित्तत्वात् नातिरिक्ते मानमस्तीति चेत्; न, संयुक्तसंयोगाल्पत्वाद्यविशेषेऽपि द्रष्टरि परापरव्यवहाराभावात्। तन्निमित्तपरत्वाद्युत्पत्तावपि नियमः कथमिति चेदित्थम्—निमित्तं हि नैमित्तिकानुसारि प्रसिद्धं न विपरीतं, व्यभिचारात्। तर्हि व्यवहारस्य नैमित्तिकत्वेऽप्ययं न्यायस्तुल्यः; सत्यम्, तथापि संयुक्तसंयोगभूयस्त्वादिव्यवहारस्य द्रष्टरि भावेऽपि परत्वादिव्यवहारादर्शनात्तदतिरिक्तमस्ति परत्वादि। तत्प्रत्येकं द्विविधं असमवायिकारणद्वैविध्यात्। तत्र समवायिकारणं तावत् पिण्ड एव। दिक्पिण्डसंयोगो ऽसमवायिकारणं विप्रकृष्टसन्निकृष्टरूपापेक्षाबुद्धिर्निमित्तकारणम्। कालसंयोगजपरत्वादेरप्येवं कारणत्रयं द्रष्टव्यम्।

एकदिगवस्थितयोरेकस्य द्रष्टुरपेक्षाबुद्धिवशात् परत्वाद्युत्पद्यते अतो न देशद्रष्टृकालनियमः परत्वाद्युत्पत्तौ शङ्कनीयः। कालसंयोगजे तु परत्वादौ द्रष्टृदेशनियम इष्यत एव। बह्वल्पतपनपरिस्पन्दान्तरितजन्मनोऽ विशिष्टत्वात्। कादाचित्कत्वं तु परत्वादेरपेक्षाबुद्धिवशात्। विनाशस्तु परत्वादेः क्वचिदपेक्षाबुद्धिदिक्पिण्डसंयोगद्रव्याणां प्रत्येकं नाशात्, क्वचिच्च द्रव्यापेक्षाबुध्द्योर्युगपन्नाशात्, तथा द्रव्यसंयोगयोर्युगपन्नाशात्। एवं संयोगापेक्षाबुध्द्योर्युगपन्नाशात्। क्वचित्पुनरपेक्षाबुध्द्यादीनां त्रयाणां युगपन्नाशादिति सप्तधा।

बुद्धेर्ज्ञानमिति लक्षणम्, वैधर्म्यं च। मानं तु जानामीत्यनुव्यवसायरूपम्। सा द्विविधा—विद्या अविद्या चेति। यथार्था ज्ञप्तिर्विद्या अयथार्था अविद्या। तत्र अविद्या चतुर्विधा संशयविपर्ययानध्यवसायस्वप्नलक्षणा। संशयस्तावत् विरोध्यनेकप्रकारवत्तया धर्म्यवलम्बी प्रत्ययः 'स्थाणुर्वा पुरुषो वे'त्यादिरूपः, स च स्थाण्वादिस्मृतौ विशेषाग्रहे समानधर्मग्रहात् जायते। आत्मात्ममनः संयोगयोः समवाय्यसमवायिकारणत्वं च सर्वज्ञानेषु तुल्यम्॥

यत्तु कारणभेदात् तद्भेदकल्पनं तत्समानधर्मग्रहसंभवे न युक्तं, कल्पनागौरवात्। शब्दस्य तावत् नित्यानित्यादिसंशये वियद्विशेषगुणत्वेन नित्यानित्यवैलक्षण्यं सामानोधर्मो हेतुः। एवं सदुदकत्वमित्यत्रोपलभ्यत्वमयोग्येत्वनुपलभ्यत्वं, विप्रतिपत्तौ च विरुध्दप्रतिपत्तिविषयत्वम्। तस्मादेकविध एव संशयः॥ अयथार्थनिश्चयात्मकंज्ञानं विपर्ययः। यथा गवादावश्वादिज्ञानम्। अत्रारोप्याधिष्ठानयोर्विवेकाग्रहः सामान्यवत्तया ज्ञानं कारणदोषश्च हेतुः।

किमिदमित्यालोचनमात्रमनध्यवसायः । यथा वाहीकादेः पनसादौ 'किं संज्ञकोऽयं वृक्ष' इत्यादिप्रत्ययः ॥ निद्रादुष्टमनोजन्यं ज्ञानं स्वप्नः । स त्रिविधः कारणभेदात् । तथा हि—क्वचिन्निद्राणस्य संस्कारपाटवादिष्टवस्तुदर्शनं जायते । एवं वातादिधातुदोषवशादाकाशगमनादिदर्शनम् । तथा अदृष्टादत्यन्तासंभावितभूगोलभ्रमणादिदर्शनम् ।

केचित्तु स्वप्नस्य स्मृतित्वमिच्छन्ति । तेषां नेत्थंभावे मानमस्ति । संस्कारजत्वात्स्वप्नस्य स्मृतित्वमिति चेत् ; न; प्रत्यभिज्ञायामनैकान्त्यात् । संस्कारमात्रजत्वं तु स्वप्नस्य सिध्दम्[1] । मानेतरत्वे सति संस्कारजत्वं च हेतुरख्यातिपक्षे विशेषणासिध्दः ; इतरेतराभावाभावात्, तस्मादस्मृतिः स्वप्नोऽपरोक्षत्वाद्दोषजन्यत्वादनुभवत्वाच्च । अथ हेतुत्रयमपीदमसिध्दम् । स्वप्नस्य स्मृतिताभ्युपगमात् । दोषस्य च विशेषग्रहविरोधितया विवेकाग्रहोपयोगित्वात् । न, स्वप्नस्यापरोक्षत्वानुभवत्वयोरिदमाकारप्रत्ययत्वेन साधयितुं शक्यत्वात् । वस्तुग्रहे तावन्मात्रविवेकस्याग्रहासंभवात्त न दोषस्याप्यन्यथासिद्धिः ॥

यथार्था ज्ञप्तिर्द्विधेति विद्यायाः सामान्यलक्षणं पूर्वोक्तम् । सा च द्विविधा प्रमाणं स्मृतिश्चेति । प्रमाणं च द्विविधम् । प्रत्यक्षमनुमानं चेति । तत्र साक्षात्कारि यथार्थं ज्ञानं प्रत्यक्षम् । तच्चैश्वरं नित्यम् । तथा हि —अयं घट एतद्घटजनकानित्य [2]ज्ञानेतरज्ञानजन्यः कार्यत्वात् पटवदिति मानसिद्धम् । जीवाश्रयं त्वनित्यम् । प्रमाणविवक्षायां तु तत्साधनं प्रत्यक्षम् । तच्च ज्ञानं बहिर्विषयमात्ममनइन्द्रियार्थानां सन्निकर्षाज्जायते । आत्मज्ञानं तु आत्ममनस्सन्निकर्षात् । बुध्द्यादिज्ञानं चात्ममनोबुद्ध्यादिसन्निकर्षात् । वस्तुमात्रस्याविपरीतस्य साक्षादालोचनं निर्विकल्पकं प्रत्यक्षम् । सविकल्पकं तु गौः शुक्लो गच्छति इति सामान्यादिविशिष्टविषयम् । अत्र विशेषणज्ञानमपि करणम् । चक्षुः स्पर्शनसंयोगात् द्रव्यग्रहणं, संयुक्तसमवायात् सामान्यगुणकर्मणां ग्रहणम् । संयुक्तसमवेतसमवायात् गुणत्वादिग्रहणम् । श्रोत्रसमवायात् शब्दग्रहणम् । समवेतसमवायाच्छब्दत्वग्रहणम् । उक्तसम्बन्धवद्विशेषण विशेष्यभावादभावस्य ग्रहणम् । समवायस्यापीति केचित् । द्रव्यादिग्रहे च विषयगतमहत्त्वोद्भूतरूपत्वाद्यपि निमित्तम् । सामान्यादीनामाश्रयग्राहकैरिन्द्रियैःग्रहणमित्ययोगिप्रत्यक्षम् । योगिप्रत्यक्षं तु योगजधर्मोपकृतान्मनसश्चतुर्विधः । परमाणुधर्माधर्मदेशादिव्यवहितविषयं ज्ञानं युक्तस्य वियुक्तस्य च जायते । तत्र युक्तस्येन्द्रियादिभ्यः प्रत्याहृत्य साक्षात्कर्तव्ये वस्तुन्यादरेण धृतमनसो वर्तमानचिन्तासन्तातस्य तज्जायते । वियुक्तस्य त्वत्यन्ताभ्यासेन परमवशीकारमापन्नस्य विगतावरणमलस्य सर्वतः प्रद्योतमानमनसः कारणविशेषात् तज्जायते । अत्र प्रमाणं तु — विमतं कस्यचित् प्रत्यक्षं प्रमेयत्वात् कुम्भवदिति । विपक्षे च बाधकस्तदर्थविधिवैयर्थ्यप्रसङ्गः । प्रतिप्रयोगे [3] च योगितदिन्द्रियादीनां तवाप्रसिद्धेराश्रयासिध्दिः । अदृष्टादीनां च अप्रत्यक्षत्वसाधने दृष्टान्ताभावः । केवलव्यतिरेकीच नेष्यते भवता । तदभ्युपगमे च अप्रसिद्धविशेषणता पक्षस्य, बाधकश्च तर्कोऽभिहितः ; विपक्षे च बाधाभावः । असिध्यादिविरहस्त्वतिरोहित एव ॥

---

[1] वातादिदोषाददृष्टाच्च स्वप्नोत्पत्तेरिति भावः ।

[2] सिद्धसाध्यत्वपरिहाराय — अनित्यज्ञानेतरेति । अप्रसिध्दिवारणार्थं — एतदिति । यस्य कस्यचिद्घटस्य एतद्घटजनकानित्यज्ञानान्यज्ञानजन्यत्वस्य नित्यज्ञानासिध्दावपि सिध्देः सिद्धसाध्यता अतः — अयमिति ।

[3] योगी नातीन्द्रियार्थदर्शी प्राणित्वात् अस्मदादिवत् । एवं तद्बुद्धितदिन्द्रियाण्यपि पक्षीकृत्य प्रतिप्रयोगे ।

लिङ्गजं ज्ञानं विद्याया द्वितीयो भेदोऽनुमितिरूपम्। मानविवक्षायां तु सम्यगविनाभावेनानुभवसाधनमनुमानम्। अन्ये तु सम्यगविनाभावेन परोक्षानुभवसाधनमनुमानमाहुः। तत्र परोक्षत्वविशेषणं व्यर्थं व्यभिचाराभावात्। अविनाभूतविषयं प्रत्यक्षमविनाभूतजन्यं, विषयस्यापि तत्कारणत्वादिति व्यभिचारोऽस्तीति चेन्न, अत्र साधनपदेन करणस्यैव वक्तव्यत्वात्। अन्यथा अदृष्टादेरनुमानत्वप्रसङ्गात्। नेयं सहार्थे तृतीया; किंतु इत्थंभाव [1] इति चेन्न। लक्षणस्य पक्षधर्मतापत्तेः। नहि धूमादेरविनाभावत्वमस्ति। स्वाभाविकी साध्येन साधनस्य व्याप्तिरविनाभावः। औपाधिकव्यावृत्यर्थं स्वाभाविकीत्युक्तम्। उपाधिश्च स्पष्टं वक्ष्यते। अविनाभावो द्विविधः अन्वयव्यतिरेकभेदात्। साध्येन साधनस्य जात्युपाधौ व्याप्तिरन्वयः। तादृक्साधनाभावेन तादृक्साध्याभावस्य व्याप्तिर्व्यतिरेकः। साधनं लिङ्गम्। तत् द्विविधम्। दृष्टं सामान्यतो दृष्टं च। प्रत्यक्षयोग्यार्थानुमापकं दृष्टम्। यथा-धूमोऽग्नेरिति। स्वभावविप्रकृष्टार्थानुमापकं सामान्यतो दृष्टं, यथा रूपादिज्ञानं चक्षुरादेरिति। तत्पुनर्द्विविधं स्वार्थं परार्थं च। तदुपदेशनिरपेक्षं स्वार्थम्। तदपेक्षं परार्थम्। उपदेशस्तु पञ्चावयवं वाक्यम्।

प्रतिज्ञाहेतूदाहरणोपनयनिगमनान्यवयवाः। प्रतिपिपादयिषया पक्षवचनं प्रतिज्ञा। यथा अयं गिरिर्वह्निमानिति। साधनत्वव्यापकं लिङ्गवचनं हेतुः। स त्रिविधः। अन्वयव्यतिरेकी, केवलान्वयी, केवलव्यतिरेकी चेति। तत्र पञ्चरूपोऽन्वयव्यतिरेकी, रूपाणि तु पक्षधर्मत्वं, सपक्षे सत्त्वं, विपक्षात् व्यावृत्तिरबाधितविषयत्वमसत्प्रतिपक्षत्वं चेति। साध्यधर्मविशिष्टो धर्मी पक्षः। तत्र वृत्तित्वं हेतोः पक्षधर्मत्वम्। साध्यसमानधर्मा धर्मी सपक्षः; तत्र सर्वस्मिन्नेकदेशे वा वृत्तिः सपक्षे सत्त्वम्। साध्यविपरीतधर्मा धर्मी विपक्षः; तत्र सर्वस्मिन् हेतोरवृत्तिर्विपक्षाद्व्यावृत्तिः। प्रमाणाविरोधिनि प्रतिज्ञातार्थे हेतोर्वृत्तिरबाधितविषयत्वम्। साध्यतद्विपरीतयोः साधनस्यात्रिरूपत्वमसत्प्रतिपक्षत्वम्। विपक्षबाधकतर्कोऽप्यनुमानाङ्गमभ्युपेयम्। उपाधेर्व्यभिचारस्य वा शङ्कानिवर्तको हि सः। यथा यद्ययमनग्निर्धूमः स्यादिति। सोऽन्वयव्यतिरेकी द्विविधः सपक्षवृत्तिभेदात्। यथा-अनित्यः शब्दः कार्यत्वात् इति सपक्षव्यापकः। सामान्यवत्वे सत्यस्मदादिबाह्येन्द्रियग्राह्यत्वादिति सपक्षैकदेशवृत्तिः पक्षव्यापकोऽविद्यमानविपक्षः सपक्षवृत्तिः केवलान्वयी। सोऽपि पूर्ववत् द्विविधः। तद्यथा—विवादपदान्यदृष्टादीनि कस्यचित् प्रत्यक्षाणि प्रमेयत्वात् कुम्भवत्। मीमांसकानामप्रत्यक्षत्वात् अस्मत्सुखादिवदिति सपक्षैकदेशवृत्तिः। पक्षव्यापकः अविद्यमानसपक्षो विपक्षाद्व्यावृत्तः केवलव्यतिरेकी। यथा सर्वं कार्यं सर्ववित्कर्तृपूर्वकं कादाचित्कत्वात्। यदुक्तसाध्यं न भवति न तदुक्तसाधनम्, यथाऽऽकाशम्। प्रसङ्गोऽप्येयोऽपि क्वचित् केवलव्यतिरेकी; यथा न निरात्मकं जीवच्छरीरं अप्राणादिमत्त्वप्रसङ्गाल्लोष्टवदिति।

एतेन हेत्वाभासानामहेतुत्वमुक्तं भवति। हेतुलक्षणरहिता हेतुवदवभासमाना हेत्वाभासाः। असिध्दविरुध्दानैकान्तिकानध्यवसितकालात्ययापदिष्टप्रकरणसमाः। अनिश्चितपक्षवृत्तिरसिध्दः। पक्षविपक्षयोरेव वर्तमानो विरुद्धः। पक्षसपक्षविपक्षवृत्तिरनैकान्तिकः। साध्यासाधकः पक्ष एव वर्तमानोऽनध्यवसितः। असाधारणानैकान्तिक इत्यन्ये॥ तत्पक्षे साध्यसंशयहेतुरनैकान्तिक इति लक्षणम्। प्रमाणबाधितप्रतिज्ञातार्थे पक्षे वर्तमानो हेतुः कालात्ययापदिष्टः। स्वपरपक्षसिद्धौ त्रिरूपो हेतुः प्रकरणसमः। यद्यप्येषां सूक्ष्मा भेदाः अतिबहुत्वात् न शक्यन्ते कार्त्स्न्येन वक्तुं, तथापि स्थूलदृष्ट्या कियन्तो भेदा अभिधीयन्ते।

---

[1] अविनाभावप्रत्यक्षे तु तस्य तेन रूपेण कारणत्वमस्ति, तद्वारणाय विशेष्यमिति भावः।

असिद्धभेदास्तावत्—स्वरूपासिद्धो यथा—अनित्यः शब्दः चाक्षुषत्वात्। व्यधिकरणासिद्धो यथा—अनित्यः शब्दः आकाशस्य नित्यत्वात्। विशेष्यासिद्धो यथा—अनित्यः शब्दः सामान्यवत्त्वे सति चाक्षुषत्वात्। विशेषणासिद्धो यथा-अनित्यः शब्दःचाक्षुषत्वे सति सामान्यवत्त्वात्। भागासिद्धो यथा-अनित्यः शब्दः प्रयत्नानन्तरीयकत्वात्। आश्रयासिद्धो यथा—अस्ति प्रधानं विश्वपरिणामित्वात्। आश्रयैकदेशासिद्धो यथा—नित्याः प्रधानपुरुषेश्वराःअकृतकत्वात्। व्यर्थविशेष्यासिद्धो यथा—नित्यः शब्दः कृतकत्वे सति सामान्यवत्त्वात्। व्यर्थविशेषणासिद्धो यथा—अनित्यः शब्दः सामान्यवत्वे सति कृतकत्वात्। सन्दिग्धासिद्धो यथा—धूमबाष्पाद्यनिश्चये कश्चिदाह—अग्निमानयं गिरिः धूमवत्त्वादिति। सन्दिग्धविशेष्यासिद्धो यथा—रागादिमान् कपिलः पुरुषत्वे सति अनुत्पन्नतत्त्वज्ञानत्वात्। सन्दिग्धविशेषणासिद्धो यथा—रागादिमान् कपिलः अनुत्पन्नतत्त्वबोधत्वे सति पुरुषत्वात्। औपाधिकव्याप्तिको व्याप्यत्वासिद्धः। यथा—यागे पश्वालम्भः अधर्मसाधनं हिंसात्वात्, व्यर्थहिंसावत्। अत्र हि निषिद्धत्वमुपाधिः। अथोपाधेः किं लक्षणं? साधनाव्यापकत्वे सति साध्यव्यापकत्वमिति चेन्न। शब्दादिनित्यत्वादिहेतुषु पक्षेतरत्वोपाधेः सत्त्वप्रसङ्गात्। नैवं, साध्यव्यापकशब्देन साध्यसमव्याप्तेर्विवक्षितत्वात्॥

यथाऽऽहुः भट्टाचार्याः—

[1] "समासमाविनाभावावेकत्र स्तो यदा तदा।

समेन यदि नो व्याप्तस्तयोर्हीनो ऽप्रयोजकः॥" इति

साध्येनैकस्य धर्मस्य समो ऽविनाभावोऽपरस्य चासमस्तौ समासमाविनाभावौ यद्येकत्र धर्मिणि स्तः, स तत्रापि समाविनाभावेन असमाविनाभावो यदि न व्याप्तस्तदा असमव्याप्तिकोऽभावो ऽप्रयोजकः न साध्यगमकः इत्यर्थसंक्षेपः। एतदेवोदयनेनाप्युक्तम्—

'एकसाध्याविनाभावे मिथः सम्बन्धशून्ययोः।

साध्याभावाविनाभावी स उपाधिर्यदत्ययः'॥ इति

मिथः परस्परं व्याप्तिशून्ययोः धर्मयोरेकेन साध्येनाविनाभावे सति, यस्यात्ययोऽभावः साध्याभावाविनाभावी साध्याभावेन व्याप्तः स उपाधिरिति संक्षेपः। अतः साधनाव्यापकः साध्यसमव्याप्तिरित्युदयनस्यापि संमतम्। साध्यभावाभावाभ्यामुपाधिभावाभावयोः व्याप्तित्वाभिधानात्।

नन्वेवमपि केवलान्वयिप्रयोगे पक्षेतरत्वमुपाधिः स्यात्; न, तस्य साध्यव्यापकत्वात्। अदृष्टादि कस्यचित्प्रत्यक्षं प्रमेयत्वादिति ह्यन्वयी प्रयोगः; अदृष्टादि चेश्वरप्रत्यक्षं', 'यः सर्वज्ञः सर्वविदि'ति श्रुतेः (मु-1-9)। न च तत्र पक्षेतरत्वमस्ति 'अशरीरं वावे'ति (छा-8-12-1) श्रुतिसिद्धेऽपि हि मोक्षे अनुमानं दृश्यते, दुःखसन्ततिरत्यन्तमुच्छिद्यते, सन्ततित्वात्, ज्वालसन्ततिवत् इति।

---

[1] समश्चासमश्च समासमौ; समत्वं अन्योन्यव्याप्यव्यापकभावः, तदभावोऽसमत्वं; साध्येन समासमाविनाभावौ ययोः धर्मयोः तौ धर्मिण्येकत्र यदि स्यातां तदा समाविनाभाववता धर्मेण यदि असमाविनाभाववान् धर्मो न व्याप्तः स्यात् तर्हि तयोर्धर्मयोर्मध्येऽसमव्याप्तिको धर्मः साध्यं प्रत्यप्रयोजकः, समव्याप्तिकस्तु प्रयोजकोह्युपाधिरित्यर्थः। समेन यदि नो व्याप्त इति साधनाव्यापकत्वमुक्तम्।

ननु उपाधिस्वीकारे व्याप्तिरपि न सिध्येत । व्याप्तेर्हि निरुपाध्यविनाभावत्वात् उपाधिसिद्ध्यायत्ता सिद्धिः; उपाधेरपि साध्यसमव्याप्तित्वात् व्याप्तिसिद्ध्यायत्ता सिद्धिरित्यन्योन्याश्रयता; न, उपाधिसिद्धेः व्यभिचारसिद्ध्यायत्तत्वात्। तर्हि व्याप्तिरपि तथैवेति कृतमुपाधिनिरूपणेनेति चेन्न ।। मैत्रतनयत्वादेरपि श्यामत्वादिगमकत्वप्रसङ्गात् । तदेवं साधनाव्यापकः साध्यसमव्याप्तिरुपाधिरिति सिद्धम् । तस्मादुपाधिप्रयुक्तव्याप्तिः व्याप्यत्वासिद्धो ऽभ्युपेयः । शङ्कितोपाधिव्यभिचारौ तु विपक्षबाधकतर्काभावोन्नेयौ ।।

तर्कदूषणं चतुर्विधम्—तथा हि — यदि मनोमहत्त्वमप्रामाणिकं तदा तद्भावरूपं न स्यादिति । अत्र धर्म्यसिद्धेराश्रयासिद्धिः आपाद्यस्येष्टत्वादिष्टापत्तिः । यदप्रामाणिकं तद्भावरूपं न भवतीति व्याप्त्यभावात् प्रशिथिलमूलता । मनोमहत्त्वं प्रामाणिकं भावरूपत्वादिति अनुमानाभावे तत्रापर्यवसानात् विपर्ययापर्यवसानं चेति । एते असिद्धभेदाः वादिप्रतिवादिनोरन्यतरस्याप्यसिद्धा हेत्वाभासा एव । विरुद्धभेदास्तु सति सपक्षे चत्वारो विरुद्धाः, पक्षविपक्षव्यापको यथा--नित्यः शब्दः कार्यत्वात् । पक्षव्यापकोऽपि पक्षैकदेशवृत्तिः यथा— नित्यः शब्दः सामान्यवत्त्वे सति अस्मदादिबाह्येन्द्रियग्राह्यत्वात् । पक्षविपक्षैकदेशवृत्तिर्यथा—नित्यः शब्दः प्रयत्नानन्तरीयकत्वात् ।। पक्षैकदेशवृत्तिर्विपक्षव्यापको यथा—नित्या पृथिवी कृतकत्वात् । असति सपक्षे चत्वारो विरुद्धाः पक्षविपक्षव्यापको यथा— आकाशविशेषगुणः शब्दः, प्रमेयत्वात् । पक्षविपक्षैककदेशवृत्तिर्यथा — आकाशविशेषगुणः शब्दः प्रयत्नानन्तरीयकत्वात् । पक्षव्यापको विपक्षैकदेशवृत्तिर्यथा — आकाशविशेषगुणः शब्दः, सामान्यवत्त्वे सत्यस्मदादिबाह्येन्द्रियग्राह्यत्वात् । पक्षैकदेशवृत्तिर्विपक्षव्यापको यथा — आकाशविशेषगुणः शब्दः, अपदात्मकत्वात् । अत्र पक्षैकदेशवृत्तयश्चत्वारो विरुद्धभेदाः असिद्धावप्यन्तर्भवन्ति उभयलक्षणोपपत्तेः । अनैकान्तिकभेदास्तु — पक्षत्रयव्यापको यथा— नित्यः शब्दः प्रमेयत्वात् । पक्षव्यापकः सपक्षविपक्षैकदेशवृत्तिर्यथा— नित्यः शब्दः प्रत्यक्षत्वात् । पक्षसपक्षव्यापको विपक्षैकदेशवृत्तिर्यथा— गौरयं विषाणित्वात् । पक्षविपक्षव्यापकः सपक्षैकदेशवृत्तिर्यथा — नायं गौः विषाणित्वात् । पक्षत्रयैकदेशवृत्तिर्यथा—नित्या पृथिवी प्रत्यक्षत्वात् ।। पक्षसपक्षैकदेशवृत्तिर्विपक्षव्यापको यथा–द्रव्याणि दिक्कालमनांसि, अमूर्तत्वात् । पक्षविपक्षैकदेशवृत्तिः सपक्षव्यापको यथा — न द्रव्याणि दिक्कालमनांस्यमूर्तत्वात् । सपक्षविपक्षव्यापकः पक्षैकदेशवृत्तिर्यथा—न द्रव्याण्याकाशकालदिगात्ममनांसि क्षणिकविशेषगुणरहितत्वात् । अनध्यवसितभेदास्तु अविद्यमानसपक्षविपक्षः पक्षव्यापको यथा — सर्वं नित्यं सत्त्वात् । अविद्यमानसपक्षविपक्षः पक्षैकदेशवृत्तिर्यथा— सर्वं नित्यं कार्यत्वात् । विद्यमानसपक्षविपक्षः पक्षव्यापको यथा— नित्यः शब्दः आकाशविशेषगुणत्वात् । विद्यमानसपक्षविपक्षः पक्षैकदेशवृत्तिर्यथा— सर्वं द्रव्यं अनित्यं क्रियावत्त्वात् । अविद्यमानविपक्षो विद्यमानसपक्षः पक्षव्यापको यथा — सर्वं कार्यं नित्यं उत्पत्तिधर्मत्वात् । अविद्यमानविपक्षो विद्यमानसपक्षः पक्षैकदेशवृत्तिर्यथा— सर्वं कार्यं नित्यं सावयवत्वात् । कालात्ययापदिष्टभेदास्तु प्रत्यक्षविरुद्धो यथा—अनुष्णोऽग्निः कृतकत्वात् । प्रत्यक्षैकदेशविरुद्धो यथा—सर्वं तेजोद्रव्यमनुष्णं रूपवत्त्वात् ।

---

[1] उपाधिलक्षणे व्याप्तिशब्देन व्यभिचाराभावस्योक्तत्वात् ।

अनुमानविरुद्धो यथा — परमाणवो नित्याः मूर्तत्वात्। अनुमानैकदेशविरुद्धो यथा— नित्याश्रयाः द्रव्यरूपरसगन्धस्पर्शाः नित्याः, अप्रदेशवृत्तिसमानजात्यारम्भकत्वे सति परमाणुवृत्तित्वात्,[1] तद्गतैकत्ववत्। आगमविरुद्धो यथा—ब्राह्मणेन पातव्या सुरा द्रवद्रव्यत्वात्। आगमैकदेशविरुद्धो यथा – सर्वेषां देवर्षीणां शरीराणि पार्थिवानि शरीरत्वात् अस्मच्छरीरादिवत्[2]। प्रकरणसमस्योदाहरणं यथा—नित्यः शब्दः पक्षसपक्षयोरन्यतरत्वात् सपक्षवदिति। एकत्र तुल्यलक्षणविरुद्धहेतुद्वयोपनिपातो विरुद्धाव्यभिचारीत्येके। यथा नित्यमाकाशं अमूर्तद्रव्यत्वात् आत्मवत्; अनित्यमाकाशं अस्मद्बाह्येन्द्रियग्राह्यगुणाधारत्वात् कुम्भवदिति। इदं तु प्रयोगद्वयं तत्त्वनिर्णरणाक्षमं प्रतिहेत्वाभासो न वास्तवो वस्तुनि विकल्पासंभवात्।

सम्यग्दृष्टान्ताभिधानमुदाहरणम्। तत् द्विविधम् । साधर्म्यवैधर्म्यभेदात्। अन्वयमुखेन दृष्टान्ताभिधानं साधर्म्योदाहरणं, यथा—अनित्यः शब्दः तीव्रादिधर्मोपेतत्वात्; यत्तीव्रादिधर्मोपेतं तदनित्यं, यथा सुखम्। व्यतिरेकमुखेन दृष्टान्ताभिधानं वैधर्म्योदाहरणं, यथा—यद् नित्यं न भवति तत्तीव्रादिधर्मोपेतं न भवति, यथा आकाशमिति। उदाहरणलक्षणरहिता उदाहरणवदवभासमाना उदाहरणाभासाः। ते चानेकप्रकाराः। तथा हि—अनित्यं मनः मूर्तत्वात् इत्यस्मिन् प्रयोगे सर्वे उदाहरणाभासा उच्यन्ते। यन्मूर्तं तदनित्यं, यथा परमाणुरिति साध्यविकलः; यथा कर्मेति साधनविकलः; यथा आकाशमित्युभयविकलः; यथा शशविषाणमित्याश्रयविहीनः। घटवदित्यव्याप्त्यभिधानं; यदनित्यं तन्मूर्तं दृष्टमिति विपरीतव्याप्त्यभिधानं; इत्येतौ वचनदोषौ। यदनित्यं न भवति तन्मूर्तं न भवति, यथा परमाणुरिति साधनाव्यावृत्तः, यथा कर्मेति साध्याव्यावृत्तः, यथा कुम्भ इत्युभयाव्यावृत्तः, यथा खपुष्पमित्याश्रयहीनः आकाशवदित्यव्याप्त्यभिधानम्, यन्मूर्तं न भवति तदनित्यं न भवति यथा आकाशमिति विपरीतव्याप्त्यभिधानं इत्येतौ वचनदोषौ। अत्र आद्याः षट् साधर्म्योदाहरणाभासाः; इतरे षट् वैधर्म्योदाहरणाभासाः इति।

अन्ये तु सन्देहद्वारेणापरानष्टावुदाहरणाभासान् वर्णयन्ति। सन्दिग्धसाध्यो यथा—महाराज्यं करिष्यत्ययं सोमवंशोद्भवत्वात्, विवक्षितराजपुत्रवत्। सन्दिग्धसाधनो यथा — नायं सर्वज्ञः रागादिमत्त्वात् रथ्यापुरुषवत्। सन्दिग्धोभयो यथा — गमिष्यति स्वर्गं विवक्षितः पुरुषः समुपार्जितशुक्लधर्मत्वात्; देवदत्तवत्॥ सन्दिग्धाश्रयो यथा—नायं सर्वज्ञो बहुवक्तृत्वात् भविष्यद्देवदत्तपुत्रवत्॥ सन्दिग्धसाध्याव्यावृत्तो यथा—यो महाराज्यं न करिष्यति स सोमवंशोद्भूतो न भवति यथा ऽन्यो राजपुत्रः। सन्दिग्धसाधनाव्यावृत्तो यथा — यः सर्वज्ञः स रागादिरहितः यथा सर्वशास्त्राभिज्ञः पुरुषः। सन्दिग्धोभयाव्यावृत्तो यथा— यः स्वर्गं न गमिष्यति स समुपार्जितशुक्लधर्मोपि न भवति, यथा दुःस्थः पुरुषः। सन्दिग्धाश्रयो यथा—यः सर्वज्ञः स बहुवक्ता न भवति, यथा भविष्यद्देवदत्तपुत्र इति। दृष्टान्ते प्रसिद्धाविनाभावस्य साधनस्य दृष्टान्तोपमानेन पक्षे व्याप्तिव्यापकं वचनमुपनयः। तथा च तीव्रादि

---

[1] तन्तुगतरूपादौ व्यभिचारवारणाय परमाण्विति। परमाणुद्वित्वादिवारणाय– समनेत्यादि। संयोगादिवारणाय · अप्रदेशेति।

[2] केषांचिद्देवशरीराणां आप्यत्वात्तैजसत्वाच्च आगमविरोधः।

धर्मोपेतः शब्द इति साधर्म्योपनयः। न च तथा तीव्रादिधर्मोपेतः शब्दो न भवतीति वैधर्म्योपनयः। उपनयानन्तरं सहेतुकं प्रतिज्ञायाः पुनर्वचनं निगमनम्, तस्मादनित्य एवेति। न चेदमनर्थकं साध्यविरुद्धाभावप्रतिपादकप्रमाणसूचकत्वात् साध्यावधारणतया निर्णयरूपत्वाच्च। तथा चोक्तम् –

"विमृश्य पक्षप्रतिपक्षाभ्यामर्थावधारणं निर्णयः" इति। निर्णयश्चार्थवान् तथा प्रवृत्तिनिमित्तत्वात्[1]। वादिप्रतिवादिनोः पक्षप्रतिपक्षपरिग्रहः कथा। तत्र वीतरागकथा तत्त्वनिर्णयफला वाद इत्युच्यते। विजिगीषुकथा तु कथकाशक्तिनिरूपणावसाना यथोक्तोपपन्नछलजातिनिग्रहस्थानसाधनोपालम्भो जल्पः, स्वपक्षस्थापनाहीना वितण्डेति। अनभिप्रेतार्थकल्पनया शब्ददूषणं छलम्। तत्त्रिविधम्–वाक्छलम्, सामान्यछलम्, उपचारछलं चेति। यथा अविशेषाभिहितेऽर्थे वक्तुरभिप्रेतार्थान्तरकल्पतया वाक्छलम्। यथा–नवकम्बलोऽयमित्युक्ते, कुतोऽस्य नवकम्बला इति। संभावनयोक्तसामान्यस्य हेतुत्वारोपेण तन्निषेधः सामान्यछलम्। यथा–अहो चतुर्वेदाभिज्ञोऽयं ब्राह्मण इति केनचिदुक्ते किमत्राश्चार्यं संभवति ब्राह्मणे चतुर्वेदाभिज्ञत्वमिति चान्येनोक्ते, छलवाद्याह — नैतत्, व्रात्येनानैकान्तादिति। उपचारप्रयोगेषु मुख्यार्थकल्पनया प्रतिषेधः उपचारछलं–मञ्चाः क्रोशन्तीत्युक्ते छलवाद्याह "पुरुषाः क्रोशन्ति न मञ्चाः अचेतनत्वादि"ति।

स्वव्याघातकमुत्तरं जातिः सा चतुर्विंशतिप्रकारा, साधर्म्यसमा— वैधर्म्यसमा उत्कर्षसमा – अपकर्षसमा— वर्ण्यसमा — अवर्ण्यसमा—विकल्पसमा— साध्यसमा—प्राप्तिसमा—अप्राप्तिसमा — प्रसङ्गसमा—प्रतिदृष्टान्तसमा — अनुत्पत्तिसमा—संशयसमा—प्रकरणसमा—अहेतुसमा—अर्थापत्तिसमा—अविशेषसमा — उपपत्तिसमा —उपलब्धिसमा— अनुपलब्धिसमा—नित्यसमा—अनित्यसमा—कार्यसमेति॥ आसां च सर्वासां स्वस्मिन्नपि दूषकत्वं सममिति समशब्दार्थः। एतदेव च दोषाभासत्वे मूलम्। तत्र साधर्म्यमात्रेण प्रतिरोधाभिधानं साधर्म्यसमा। अनित्यः शब्दः कार्यत्वात् कुम्भवदित्युक्ते, नैतदेवं, अस्ति हि शब्दस्य नित्येनाकाशेन साधर्म्यममूर्तत्वं; ततोऽयं नित्यः स्यादिति। वैधर्म्यमात्रेण प्रतिरोधाभिधानं वैधर्म्यसमा—कुम्भवैधर्म्यादमूर्तत्वात् अकाशवत् शब्दो नित्यः स्यादिति। दृष्टान्ते दृष्टस्य पक्षधर्मतया अनिष्टधर्मस्यापादानमुत्कर्षसमा—अनित्यः शब्दः कार्यत्वात्, कुम्भवदित्युक्ते कुम्भो रूपादिमान् दृष्टः तथा शब्दोऽपि स्यादविशेषादिति। व्यापकाभिमतधर्मव्यावृत्त्या प्रकृतानुमानविषयापनयनमपकर्षसमा— यदि तु कृतकत्वात् घटवदनित्यः शब्दस्तर्हि तद्वदेव सावयवः स्यात्; अथ नैवं अनित्योऽपि तर्हि न स्यादविशेषादिति। पक्षवत् साध्यसाधनवत्तया दृष्टान्तस्य हेतुना साधनीयत्वापादानं वर्ण्यसमा —शब्दवत् घटेऽपि अनित्यत्वकृतकत्वे साधनीये, अन्यथा साध्यादिविकलता दृष्टान्तस्य स्यादिति। पक्षस्य साध्यवत्तया वर्णनीयत्वापादानं अवर्ण्यसमा— यदि दृष्टान्तवत् सिद्धार्थः पक्षः तर्हि न ख्यापनीयः सिद्धसाध्यत्वात्। अथ न, तथापि न ख्यापनीयः दृष्टार्थहेतुमत्तया अदृष्टत्वादिति। व्यभिचारशङ्कोद्भावनं विकल्पसमा — यथा हि प्रमेयत्वेऽपि किञ्चिदनित्यं कुम्भादि, किञ्चिन्नित्यं आकाशादि, तथा कृतकत्वेऽपि किञ्चिदनित्यं कुम्भादि, किञ्चिच्च नित्यं शब्दादि स्यादिति। पक्षे साध्यस्य धर्मिहेत्वोश्च तल्लिङ्गसाध्यत्वापादनं साध्यसमा। न चैषां मानान्तरात्सिद्धिः, अनुमानाद्धर्म्यादिविशिष्टसाध्यसिद्धेराश्रयणात्।

---

[1] अन्यथाप्रतिपत्त्यादिनिवृत्तिहेतुत्वात्।

न च मानानां संभूय विशिष्टबोधहेतुता समस्ति। तस्माच्छब्दादीनां कृतकत्वहेतुसाध्यता स्यादिति। प्राप्त्या-विशेषेण प्रतिक्षेपः प्राप्तिसमा। ज्ञापकं प्राप्य ज्ञानं जनयति अप्राप्य वा? अप्राप्तावतिप्रसङ्गात् प्राप्य जनयतीति वाच्यम्। प्राप्तिश्च सत एवेत्यविशेषात् किं केन जन्यमिति। अप्राप्तावतिप्रसङ्गेन प्रतिषेधोऽप्राप्तिसमा। साधकमप्राप्तं साधयतीति वाच्यम्; इतरथा सिद्धस्य साध्यत्वप्रसङ्गात्, अप्राप्तस्य साध्यत्वेऽतिप्रसङ्ग इति। अनवस्थाभासप्रसक्तिः **प्रसङ्गसमा**। तत्र ज्ञप्तौ तावत्-प्रमाणे किं प्रमाणं दृष्टान्तेऽपि को दृष्टान्त इति। विकृतौ च कारणस्यापि कारणं वाच्यम्। क्रियान्वितं हि कारणं, तस्य सदातनत्वे कार्यमपि तथा स्यादत उभयत्रानवस्थाप्रसङ्ग इति। प्रतिदृष्टान्तमात्रेण साध्यापनयनं **प्रतिदृष्टान्तसमा**। यदि घटदृष्टान्तबलेन अनित्यः शब्दः अथाकाशदृष्टान्तबलेन नित्यः किं न स्यात्, अविशेषात्। [1]अथवा घटदृष्टान्तबलेन नानित्यः शब्दः, आकाशदृष्टान्तबलेन नित्यत्वस्यैव स्वत एव सिद्धेः। नित्यत्वं हि सापेक्षादनित्यत्वात् पुरःस्फूर्तिकम्। न च शब्दसम्बद्धहेतुसम्बन्धो घटे विशेषः, दृष्टान्तस्यैव प्रधानत्वात्। हेतुर्हि दृष्टान्तबलेनैव साधक इति। प्रागुत्पत्तेः कारणाभावात् प्रत्यवस्थानमनुत्पत्तिसमा। धर्म्यादेः कारणस्योत्पत्तेः प्रागभावादाश्रयाद्यसिद्धेः साध्यासिद्धिरिति। निर्णयकारणवत् संशयकारणेन प्रत्यवस्थानं संशयसमा। यथा हि निर्णयकारणमस्तीति निर्णयः स्यादनित्य एवेति, तथा संशयकारणमप्यस्तीति अनित्यतासंशयोऽपि स्यादविशेषात्। अस्ति च समानधर्मादिदर्शनं संशयकारणमिति। अनधिकबलेन प्रमाणान्तरेण हेतोर्बाधाभिधानं **प्रकरणसमा**। शब्दस्यानित्यत्वसाधने प्रयुक्ते, नानित्यः शब्दः वर्णत्वात् तत्सामान्यवदित्यनुमानप्रत्यभिज्ञानाभ्यां हेतोर्बाधितत्वात्। यदि चैतदुभयमसाधकं कार्यत्वमपि न साधकं स्यादविशेषादिति। त्रैकाल्यासिद्धेर्हेतुभावस्य दूषणमहेतुसमा। तथा हि - सहभावे साध्यसाधनयोरविशेषात् न साध्यसाधनता। पौर्वापर्ये चान्यतराभावान्न साध्यता साधनता वा, परस्परोपहितत्वात् साध्यसाधनयोः। अस्यास्तु प्राप्त्यप्राप्तिसमाभ्यां विशेषः —अस्यां ह्येककालीनयोः भिन्नकालीनयोश्चासाध्यसाधनता आपाद्या; तयोस्तु सिद्धस्यासिद्धस्य वा असाध्यतेति। अर्थापत्त्याभासेन अनपेक्षितापादनमर्थापत्तिसमा। यदि कृतकत्वात् शब्दोऽनित्यः स्यात्तर्हि अर्थादापन्नं शब्देतरस्यानित्यताराहित्यं, विशेषविधेः शेषनिषेधविषयत्वात्; तथा च सति साध्यविकलता दृष्टान्तस्य॥ यदि चानुमानादनित्यः शब्दस्तर्हि अर्थादापन्नं प्रत्यक्षान्नित्यः इत्यतो बाधः स्यादिति। एकधर्मोपपत्तेरविशेषे सर्वाविशेषप्रसङ्गात् सद्भावोपपत्तेरविशेषसमा। यदि कृतकत्वलक्षणैकधर्मोपपत्तेः घटशब्दयोरनित्यत्वलक्षणोऽविशेषः स्यात्; अथ सद्भावलक्षणैकधर्मोपपत्तेः त्रैलोक्यस्य घाऽविशेषः किं न स्यात्। ततः किं? तादात्म्येनाविशेषे पक्षाद्यविभागः, घटजातीयत्वेनाविशेषे प्रत्यक्षादिविरोधोऽनवस्था च, सामान्यादीनामपि तज्जातीयतापत्तेरिति। उभयत्र कारणोपपत्त्या प्रत्यवस्थानमुपपत्तिसमा। यदि त्वदुक्तमनित्यत्वोपपादकं कार्यत्वमुपपन्नं तर्हि मदुक्तमपि नित्यत्वोपपादकं श्रावणत्वमुपपन्नं भवति त्वत्पक्षमत्पक्षयोरन्यतरत्वात्, त्वत्पक्षवत्। प्रकरणसमातोऽस्य विशेषः :—तत्र हि प्रतिप्रमाणस्योपन्यासोऽत्र तु तदुपपत्तेरिति। निर्दिष्टकारणाभावेऽपि साध्योपलम्भात् प्रत्यवस्थानमुपलब्धिसमा। यथा अनित्यः शब्दः कार्यत्वात् घटवत् इत्युक्ते जातिवाद्याह----न कृतकत्वमनित्यत्वे प्रयोजकं अकृतकेऽपि प्रागभावेऽनित्यत्वदर्शनादिति। अनुपलब्ध्यादेः[1] स्वात्मनि तदतद्रूपविकल्पेनानिष्टापादनमप्यनुपलब्धिसमा।

---

[1] समबलत्वात् कथमनेन साध्यापनयनमित्यरुच्या आह—अथवेति।

[1] आदिपदेन संशयाशक्त्योर्ग्रहणम्।

तथा हि—शब्दः कालविशेषे नास्ति योग्यानुपलब्धिविषयत्वात् कुम्भवदित्युक्ते, कश्चिदाह-इयमनुपलब्धिर्न तावत् सत्तयैवाभावबोधहेतुः लिङ्गान्तर्गतत्वात्; नाप्यनुपलब्ध्यन्तरोपलब्ध्या, अनवस्थापत्तेः। अतोऽनुपलब्धिः स्वात्मन्यनुपलब्धिरस्त नेति-वाच्यम्; तत्राद्ये तस्यानुपलम्भादेवाभावसिद्धेर्हेत्वभावः। द्वितीये तु तस्याः अनुपलब्ध्यभावात् असिद्धेर्हेत्वसिद्धिरिति। व्यावर्तकस्य धर्मस्य तदतद्रूपविकल्पेन व्यावर्तकत्वखण्डनं **नित्यसमा**। यथा शब्दोऽनित्यः कृतकत्वात् घटवदित्युक्ते कश्चिदाह—अनित्यत्वं शब्दे नित्यमनित्यं वा; नित्यत्वेऽस्य शब्दधर्मस्य सदातनत्वात् धर्मिणोऽपि शब्दस्य सदातनत्वापत्तिः। द्वितीये अनित्यत्वस्य शब्दे कदाचिदभावाच्छब्दो नित्यः प्राप्त इति। विपक्षस्य सपक्षत्वापादानमनित्यसमा। यथा यथाकाशवैधर्म्यात् अनित्यः शब्दः तर्हि त्रैलोक्यमेव तद्वैधर्म्यादनित्यं भवेदिति। परानुमानाङ्गसाधनाय स्वकल्पितहेतुदूषणं **कार्यसमा**। तथा हि- अनित्यः शब्दः कार्यत्वात् घटवदित्युक्ते पक्षादेरङ्गस्यासिद्धिमुद्भाव्य तत्साधकतया किञ्चित् स्वयमुत्प्रेक्ष्य तद्दूषणेनैवोक्ताङ्गस्यासिध्युपसंहारः कार्यसमेत्यर्थः। तद्यथा—शब्दोऽनित्यः कार्यत्वात् घटवदित्यभिहिते, जातिवाद्याह-भवेदेवं यदि धर्म्याद्यङ्गं परमार्थतो निश्चीयेत नतु तथा, मानाभावात् उपलब्ध्याभिहितं तत्साधनीयम्, सा चानैकान्तिकीति। आसां च सर्वासां सामान्यलक्षणोक्त्यैव दूषणाभासत्वमुक्तम्। प्रतिप्रयोगं तु तन्नोपपादितं ग्रन्थविस्तरभयात्। स्वयमेव क्वचिद्व्याप्त्यादिविरहः, क्वचित् प्रत्यक्षादिविरोधो बाधितप्रसिद्ध्या च क्वचिद्यथायोगमूहनीयम्॥

अथ निग्रहस्थानान्युच्यन्ते। कथकाशक्तिसूचकं निग्रहस्थानम्। तद्भेदास्तु प्रतिज्ञाहानिः, प्रतिज्ञान्तरं, प्रतिज्ञाविरोधः, प्रतिज्ञासन्यासो, हेत्वन्तरम्, अर्थान्तरं, निरर्थकम्, अविज्ञातार्थकं, अप्राप्तकालं, न्यूनम्, अधिकं, पुनरुक्तम्, अननुभाषणम्, अज्ञानम्, अप्रतिभा, विक्षेपो, मतानुज्ञा, पर्यनुयोज्योपेक्षणं, निरनुयोज्यानुयोगः, अपसिद्धान्तो, हेत्वाभास इति द्वाविंशतिप्रकाराः। प्रयोगाङ्गतया निर्दिष्टस्य त्यागः **प्रतिज्ञाहानिः**। प्रतिज्ञे[1]त्युक्तोपलक्षणपरम्। यथा अनित्ये वाङ्मनसी कार्यत्वादित्युक्ते भागासिद्ध्या च प्रत्युक्ते-अस्तु तर्हि वागेवानित्या कार्यत्वादिति। एवं हेत्वादेः विशेष्यस्य तद्विशेषणस्य वा त्यागे प्रतिज्ञाहानिर्द्रष्टव्या, निर्दिष्टत्यागाविशेषात्। प्रतिज्ञातस्य विशेषेण प्रतिज्ञानं प्रतिज्ञान्तरम्। तच्च धर्मितद्विशेषणसाध्यतद्विशेषणप्रक्षेपणाचतुर्विधम्। यथा-नित्या वर्णाः श्रावणत्वात् शब्दत्ववत् इत्युक्ते, ध्वनिना चानैकान्तिकत्वेन प्रत्युक्ते न ध्वनयो वर्णा इति प्रतिज्ञायां धर्मिप्रक्षेपः। शब्दोऽनित्यः इत्युक्ते ध्वनिभागे च सिद्धसाधनतया प्रत्युक्ते वर्णात्मकः शब्दः इति प्रतिज्ञायां धर्मिविशेषणप्रक्षेपः। अग्निमदिदं सुरभिधूमवत्वादित्युक्ते व्यर्थविशेषणतया च प्रत्युक्ते साम्यगग्निमदिति प्रतिज्ञायां साध्यप्रक्षेपः। विमतं कारणवदिति साधने सिद्धसाधनतया च प्रत्युक्ते उपादानाद्यभिज्ञकारणवदिति प्रतिज्ञायां साध्यविशेषणप्रक्षेप इति। प्रतिज्ञाहानितोऽस्य विशेषः उपात्तस्य स्वरूपात्यागेनैव विशेषणोपादानम्। तत्र तूपात्तस्य कस्यचिद्धानमिति। एकवक्तृकवाक्यावयवयोः परस्परविरोधः **प्रतिज्ञाविरोधः**। यथा-धर्मिनिषेधे नास्त्यात्मेति। धर्मनिषेधे यथा-ईश्वरो न[2] कर्तेति। धर्मिविधौ यथा-अतीतमस्तीति। धर्मविधौ यथा-परमाणवः सावयवा इति। स्वरूपोक्तौ यथा-हेतुव्यापारात्प्रागपि सत्कार्यं कार्यत्वादिति। विशेषणोक्तौ यथा-मध्येऽप्यसत्कार्यमाद्यन्तयोरसत्वादिति।

---

[1] उक्तं प्रयोगाङ्गम्। तेन हेत्वादिसङ्ग्रहः।

[2] ईश्वरस्य कर्तृत्वेनैव सिद्धेरित्यर्थः।

उक्तापलापः प्रतिज्ञासंन्यासः। प्रतिज्ञेत्युक्त[1]मात्रस्योपलक्षणार्थम्। स च चतुर्विधः। यथा क एवमाहेत्युक्त-स्वरूपापलापः, परपक्षोऽयं मयोक्त इति स्वकीयत्वापलापः। स्वोक्ते त्वयेदमुक्तमिति स्वोक्त्यपलापः इति। निर्दिष्टस्य-साधनस्य विशेषणवचनं हेत्वन्तरम्। हेतुरिति दृष्टान्तादेरुपलक्षणार्थम्। तच्च हेतुदृष्टान्तोपनयानां तद्दूषणस्य च विशेषणभेदाच्चतुर्विधम्। तत्र नित्यं मनो मूर्तत्वादित्युक्ते व्यभिचारेण च प्रत्युक्ते निरंशत्वे सतीति हेतुविशेषणम्। तथा कस्यचिदनित्यत्वे साध्ये सामान्यवदिति दृष्टान्ते साध्यविकलतया प्रत्युक्ते, चौपाधिकं सामान्यं विवक्षितमिति दृष्टान्त-विशेषणम्। विपरीतव्याप्त्यभिधानदोषेणोपनये प्रत्युक्ते यथाव्याप्ति तदभिधानमुपनयविशेषणम्। चतुर्थं तु अनित्यः शब्दः प्रत्यक्षत्वात् इत्युक्ते असाधकोऽयं हेतुः सपक्षे सत्वात्प्रमेयत्ववदिति प्रत्युक्ते[2] जात्युत्तरतया च परिहृते विपक्षगतत्वे सति सपक्षे सत्वादिति दूषणविशेषणम्। प्रकृतमुपक्रम्य तदनङ्गाभिधानमर्थान्तरम्। स्वमतपरमतोभयानुभयभेदेन चतुर्विधम्। तद्यथा अनित्यः शब्दः ऐन्द्रियकत्वात्कार्यत्वाद्वेत्युपक्रम्य गुणश्च सः स चाकाशस्येत्यादि स्वमते। नित्यः शब्दो अनन्यथासिद्धहेतुरहितत्वात् श्रावणत्वाद्वेत्युपक्रम्य द्रव्यं शब्दः संयोगग्राह्यः इत्यादि परमते। तथा शब्दस्य नित्यत्वादिसाधनमुपक्रम्यानुमानादिगमकमनेकविधम्। तत्र च किञ्चित् ज्ञातं, किञ्चिन्नेतीत्यादूभयमते। तथैवो-पक्रम्य हेतुरयं चक्षुर्वेदपक्षधर्मा सत्तयैव गमक इत्याद्यनुभयमते। अवाचकप्रयोगो निरर्थकम्। तस्य च प्रमादादनेकधा प्रयोग-सम्भवः। लिङ्गवचनविभक्तिवर्णविपर्यासादिनाऽनेकधा प्रयोगदर्शनात्। कथकत्रिरभिहितमर्थवत्तया परिषदज्ञातमविज्ञातार्थम्। वाचकप्रयोगादस्य निरर्थकाद्भेदः। अनर्थनिश्चयेनापार्थकात्। तच्च त्रिविधम्, वादिप्रतिवादिनोः स्वीयस्वीयतन्त्रसिद्ध-रूढिकं च। यथा-[3]पञ्चस्कन्धद्वादशायतनादि बौद्धानाम्। स्फुचकपालादि मीमांसकानाम्। [4]अर्थपारिमाण्डल्यादि तार्किकाणम्। तथाऽन्येषामपि यथासम्भवं द्रष्टव्यम्। तृतीयं तु गमितयोगमनपेक्ष्याभिहितं रूढिकम्। यथा-कश्यपतनया-धृतिहेतुरयं[5] त्रिनयनतनययानसमाननामधेयवान् तत्केतनवत्वाद्रसनीवदित्यादि। अनन्वितार्थमपार्थकम्। तत् त्रिविधम्। मुख्यं, व्यवधानान्वयं, विकल्पशेषानन्वयं[6] चेति। यथा कुण्डमजिनं दशदाडिमानि षडपूपा इत्यादि मुख्यम्। तथा गच्छति पयसा जवेन भुक्त्वा नगरं चैत्र इत्यादि द्वितीयम्। विकल्पशेषानन्वयं तु शब्दोऽनित्यः इत्युक्ते किं वर्णात्मकः ? किं वा ध्वनिरूपः ? आद्ये, घटो न स्यात्; द्वितीये चाश्वो गच्छतीति। अवयवविपर्यासवचनमप्राप्तकालम्। अवयवशब्देनात्र समस्तकथाभागो विवक्षितः, तेनात्र प्रतिज्ञाद्यवयवतद्दूषणोद्धारपरपक्षदूषणोक्तिस्वपक्षसाधनानां विपर्यास उदाहरणीयः। स्वसिद्धान्तनिर्णीतप्रयोगपरिमाणाद्धीनं[7] न्यूनम्। न चास्यापसिद्धान्तान्तर्भावः। अत्र हि स्थितसिद्धान्तमर्यादां स्वीकृत्य न्यून-

---

1 प्रयोगावयवेत्यर्थः।

2 सपक्षे सत्त्वादित्ययं हेतुः-सपक्षेऽस्ति न वा? आद्ये स साधको न वा? आद्ये व्यभिचारः, द्वितीये प्रथमस्यासाधकत्वसिद्धिः न द्वितीयः, असाधकत्वप्रसङ्गात् इत्यर्थः।

3 रूपविज्ञानवेदनासंज्ञासंस्कारसंज्ञकाः पञ्च स्कन्धाः श्रुतुसहितपृथिव्यादिपञ्चकं बाह्यव्यवहारायतनम्। तद्रहितपृथिव्यादि-धातवः विज्ञानधातवश्चेत्याध्यात्मिकव्यवहारायतनानि।

4 अर्थः द्रव्यगुणकर्माणि।

5 भूधरः, त्रिनयनतनयो गुहः तस्य यानं बर्हिः तत्समाननामधेयः अग्निः तद्वान्। रसनी-महानसः।

6 विकल्प्य विशेषणानन्वयं इति युक्तः पाठः विकल्प्ययोः विशेषणयोरन्वयो नास्ति यस्मिन् तदुत्तरमित्यर्थः।

7 न्यूनावयवप्रयोग इत्यर्थः।

प्रयोगरचनम् । तत्र तु सिद्धान्तविपरीतस्वीकारः । स्वीकृतस्याप्यन्यथा रचनं सभाक्षोभादप्युपपद्यते । [1]स्वमतसिद्धप्रयोगान्वितमुपयुक्तमपुनरुक्तं कृतकर्तव्यमभिधीयमानमधिकमधिकम् । एतेनापार्थकादिव्यवच्छेदः । अधिकानुवाददूषणाधिक्ययोश्च संग्रहः । निष्प्रयोजनं-पुनर्वचनं **पुनरुक्तम्**। अनुवादे प्रसङ्गो मा भूदिति निष्प्रयोजनमित्युक्तम् । उक्तस्य ज्ञातस्याप्रत्युच्चारणं **अननुभाषणम्** । वादियुक्तस्य पर्षदा ज्ञातस्याज्ञानविभावनमज्ञानम् । उत्तरसमये उत्तरस्यानभिधानमप्रतिभा । अन्यासक्तचित्तत्वेन कथाविच्छेदो **विक्षेपः** अनिष्टबुध्येष्टापादनं **मतानुज्ञा** । निग्रहस्थाने प्राप्ते तदनुद्भावनं **पर्यनुयोज्योपेक्षणं** । अप्रयुक्तनिग्रहोद्भावनं **निरनुयोज्यानुयोगः** । स्वसिद्धान्तातिक्रमोऽपसिद्धान्तः ॥ **हेत्वाभासा** असिद्धादयः ।

प्रमाणरूपो विद्याभेदः प्रत्यक्षं चानुमानं चेति द्विविध एव; तत्रागमाद्यन्तर्भात् । तथाहि—शब्दो गृहीताविनाभाव एव धूमवत्त्वादिवद्बोधकोऽतः सोऽप्यनुमानमेवेति । गृहीतसङ्केतस्य चैवं बुद्धिरुत्पद्यते । एते पदार्थाः मिथः संसर्गवन्तः आकांक्षादिमद्भिः पदैः स्मारितत्वात् गामानयेति पदार्थवदिति । यद्वा एतानि पदानि स्मारितपदार्थसंसर्गज्ञानपूर्वकाणि आकाङ्क्षादिमत्वे सति पदार्थस्मारकत्वात् गामभ्याजेति पदवदिति । नचार्थासिद्धिः ज्ञानावच्छेदकतयैवतत्सिद्धेः । उपमानमप्यनुमानमेव । तथाहि—आप्तस्यातिदेशवाक्यं यथा गौस्तथा गवयः इत्युपमानं, वाक्यं चानुमानमित्युक्तम् । संज्ञासंज्ञिसंबन्धपरिच्छेदः प्रत्यक्षाद्यसाध्यत्वादुपमानफलमिति चेन्न, वाक्यादेव समयपरिच्छेदोपपत्तेः । यः खलु गोसदृशः तस्य गवयशब्दः संज्ञेति वाक्यादेव समयनिश्चयो जायते । अर्थापत्तिरपि अनुमानेव । अनुपपद्यमानोपि ह्यर्थोऽविनाभूततयैव गमकः, अग्निमत्वेन विनानुपपद्यमानमिवधूमवत्त्वम् । अविनाभूतोऽप्यर्थोऽविनाभावाग्रहादनुपपद्यमानतयैव बोधक इति चेत्; न, यदाऽहमिह तदा नान्यत्र, यदाऽन्यत्र तदा नेहेति व्याप्तिग्रहात्; अतो जीवतो गृहेऽसतोऽन्यत्र सत्वमनुमीयते । श्रुतार्थापत्तिरप्यनुमितानुमानम् । लिङ्गभूताद्धि वाक्यादनुमितेन दिवाभोजनवतः पीनत्वेन तत्कारणीभूतं रात्रिभोजनमनुमीयते । यत्तु वाक्यानुपपत्त्या वाक्यान्तरकल्पनं ,तदसत् ; नहि पीनस्य दिवाभोजनप्रतिपादनेऽनुपपत्तिरस्ति, कल्प्यं च वाक्यं न तावद्विद्यमानं, अनुपलब्धिविरोधात् ; न चोत्पाद्यं प्रमाणस्याकारकत्वात्; अतो वक्तुराशयसिद्धं प्रत्येतव्यम । तच्च न शब्दरूपं संभवति; श्रोत्रग्राह्यत्वस्य शब्दत्वव्यापकस्य तत्राभावात् ।

**संभवमप्यन्ये** प्रमाणान्तरमाहुः । तत्र निश्चयाकारस्तावच्छतं सहस्रे सम्भवतीति प्रत्ययोऽविनाभावादेव जायते । न हि शतं विना सहस्रं संभवति । अनिश्चयाकारस्तु 'संभवति ब्राह्मणे तप' इति संभावनामात्ररूपप्रत्ययोऽप्रमाणमेव । अभावज्ञानं तु क्वचिच्चक्षुरादिजन्यं तदन्वयव्यतिरेकवत्वादपरोक्षत्वाच्च । क्वचिच्चानुपलब्धिलिङ्गजन्यम् । यथा प्रातर्गजाभावज्ञानम् । यत्त्वनुपलब्धिप्रधानमभावाख्यं मानान्तरमिति मतम् , तदसत् । अनुपलब्धिर्हि ज्ञाता बोधयति, किंवा अज्ञाता ? आद्येऽनवस्थाप्रसङ्गः । अनुपलब्धिरपि हि ज्ञातानुपलब्ध्यन्तरबोध्येति । द्वितीये तु सभानिर्गतस्य सभायामभावविषयः संशयो न स्यात् । अनुपलब्धिसत्तयैव तन्निश्चयप्राप्तेः । तस्मान्नाभावोऽपि मानान्तरम् । ननु केवलभूतलादिरेवाभावव्यवहारगोचरस्तत्र कथं तत्प्रमाणचिन्तावसरः; न, अभावानभ्युपगमे कैवल्यासम्भवात् । वस्तुस्वरूपं चेत् सघटेऽपि तदभावव्यवहारः स्यात् । सप्रतियोगिकं स्वरूपं तदिति चेन्न; स्वरूपे प्रतियोग्यपेक्षाऽभावात् , अन्यथा स

1 अन्वितमिति अपार्थकव्यावृत्तिः । कृतेति समीचीननिषेधः ।

-घटेऽपि घटाभावव्यवहारप्रसङ्गात् । किञ्चेयमपेक्षा नोत्पत्तौ असम्भवात्, ज्ञप्तौ त्वनवस्थाप्रसङ्गः, प्रतियोगिनोऽपि प्रतियोग्यन्तरापेक्षप्रतीतित्वात् । किञ्चाभावनिषेधेऽभावप्राप्तिर्वक्तव्या, अप्राप्तप्रतिषेधायोगात् । वादिभ्रान्तिसिद्धोऽभावो निषिध्येतेति चेन्न । भ्रान्तिर्हि तेऽविवेकरूपा । अतस्तत्त्वस्येत्थंभाव एव निषेध्यो न स्वरूपम् । अनिषेधे च यथा लोकवादिप्रसिद्धस्तथाभ्युपेयः तत्र प्रागभावोऽनादिरहेतुत्वात्, प्रध्वंसोऽनन्तो ध्वंसहेतुरहितत्वात् । ध्वंसे च प्रागभावध्वंस इव प्रतियोगिसत्वप्रसङ्गात् । इतरेतराभावः पुनरनाद्यनन्तः सर्वकालीनत्वात् । न ह्यनुत्पन्नमपि वस्तु नष्टं वा वस्त्वन्तरं भवति ।

ऐतिह्यमपि निरूप्यमाणमनुमानमेव । तथाहि-इतिहेतिनिपातसमुदायः पुरावृत्ते वर्तते तस्य भावः ऐतिह्यम् । यथाऽऽहुः—"अनिर्दिष्टप्रवक्तृकं प्रवादपारम्पर्यमैतिह्यम्" इति । तच्च श्रुतीतरदप्रसिद्धकर्तृकं लोकप्रसिद्धमवाधिताचारप्रवादपारम्पर्यम् । यदभिसन्धायाऽऽहुः—

"आचाराच्च स्मृतिं ज्ञात्वा स्मृतेश्च श्रुतिकल्पनम्" (तन्त्रवा १. ३. ४.) इति । तच्च प्रवादपारंपर्यमाप्तोपदेशपारंपर्यमेवेत्यनुमानमेव ।

स्मृतिश्च विद्याभेदः । सा चाननुभवरूपा । पूर्वानुभवापेक्षतयैव प्रतिनियतविषयत्त्वात् इच्छावदननुभवत्वादेवाप्रमात्वं सिद्धम् । अतः पृथगप्रमात्वमुदयनोक्तं व्यर्थं-संस्कारद्वारा नियतविषयत्वेनाप्रमात्वमिति । न ह्यननुभवरूपापि प्रमाऽस्ति । प्रमासाधनत्वं तत्र निषिध्यत इति चेत्; न, बुद्धेः प्रकृतत्वादन्यथाऽप्रसक्तनिषेधप्राप्तेः । नच प्रमासाधनत्वमपि निषेद्धुं शक्यं, स्मृतेः पूर्वानुभवसंस्कारानुमापकत्वात् । लक्षणं तु गृहीतमात्रविषयः संस्कारजः प्रत्ययः स्मृतिरिति । कथं तर्हि संस्कारानुपस्थितः 'स' इत्याकारः स्मृतेः । संस्कारोपनीतकुंभादिविषयतयेति ब्रूमः । इत्थंभावश्च परिशेषादवसीयते । तथाहि-न तावदयमाकारो विपर्ययस्य, तस्य बाध्यत्वात् । नापि प्रत्यक्षादेः, इन्द्रियसंयोगाद्यनपेक्षत्वात् । तस्मादनिच्छताप्यच्छमतिनोक्तप्रकारेणैव प्रत्यभिज्ञायामपि 'स' इत्याकार आस्थेयः । कार्यं चास्या इच्छाद्वेषादि प्रसिद्धम् । इष्टानिष्टसाधनतास्मरणाद्धीच्छाद्वेषौ, व्याप्तिस्मरणाच्चानुमाकारणम् । कारणं पुनः आत्मात्ममनःसंयोगसंस्काराः । यत्तु प्रातिभं मुनीनां ज्ञानमागमप्रसिद्धं तत्तावन्न स्मृतिरज्ञातविषयत्वात् । नापि विपर्ययादिरूपमवाधितनिश्चयत्वात् । न च प्रत्यक्षान्मानान्तरम्, तपउपष्टब्धमनः समाधानकारणत्वात् । तच्चागमादेव सिद्धम् । अयमेव च योगिप्रत्यक्षाद्विशेषः । तद्धि योगजातिशयजन्यमिदं तु तपोऽतिशयजन्यमिति । सुखत्वाभिसंबन्धं सुखं प्रतियोगिनिरूपणानधीनत्वे सति स्वभावत इष्यमाणत्वं सुखत्वव्यञ्जकं, सुखलक्षणं, वैधर्म्यं च । तत्कारणं तु शुभकर्मोपस्थापितविषयेन्द्रियसन्निकर्षः । अवर्तमानविषयेऽपि तज्ज्ञानम् । केषाञ्चिदुपशमादिभिः सुखं जायते यथा तत्वविदाम् । कार्यं तु रागविशेषो नयनमुखप्रसादश्च ॥

दुःखत्वयुक्तं दुःखम् । प्रतियोग्यनपेक्षत्वे सति स्वतोऽनिष्टत्वं दुःखत्वव्यवस्थापकं, लक्षणं, वैधर्म्यं च । द्वेषस्य निमित्तम् । कारणं चास्याधर्मादि । इच्छात्वयोगिनीच्छेति लक्षणम् । इच्छामीत्यनुव्यवसायविषयत्वमिच्छात्वस्य व्यञ्जकम् । सा च द्विविधा नित्या अनित्या च । नित्या ईश्वराश्रया । नित्यत्वं त्वस्या ज्ञानस्येवा-

नुमेयम्। तत्र चेच्छाकार्यं धर्मि[1]। अनित्या तु जीवाश्रया। तस्याश्चात्ममनःसंयोगादि कारणं, प्रयत्नः साक्षात्तत्कार्यम्। तद्द्वारा व्यवहारः। कामश्चानेकविधोऽत्रैवान्तर्भवति॥ द्वेषत्वयुक्तो द्वेषः द्वेषत्वस्य व्यवस्थापकं द्विष्टोऽहमित्यत्र विशेषणत्वम्। ननु दोषदर्शनात् जिहासैव द्वेष इत्युच्यते। सैव च हानप्रयत्नं प्रसूते; न, विवेकिनां हि दोषदर्शनम्। ततो जिहासा, तस्याश्च हानप्रयत्नः। अथवा दोषदर्शनात् उपेक्षैव जायते। अविवेकिनां तु दुःखसंतापात् द्वेषः। ततो निवृत्तिप्रयत्नोऽपचिकीर्षा वा। एतेन द्वेषस्य हेतुः कार्यं चोक्तम्। द्रोहः क्रोधो मन्युरक्षमा अमर्ष इति द्वेषभेदाः। प्रयत्नत्वसंबन्धात्प्रयत्नः। उत्साहवानहमित्यत्र विशेषणत्वं प्रयत्नस्य व्यवस्थापकम्। आलस्याभाव एव प्रयत्न इति चेन्न; ईश्वरप्रयत्नस्य तथात्वासंभवात्। प्रलयादिवत् प्रयत्नस्यापि कदाचित् निषेध्यनिषेधाधिकरणनिरूपणीयत्वप्रसंगाच्च। तस्मात् प्रयत्नाभाव एवालस्यम्। तस्यापि ज्ञानेच्छावद्द्वैविध्यं नित्यत्वानित्यत्वाभ्याम्। तत्रेश्वराश्रयो नित्यः। तन्नित्यत्वमिच्छानित्यत्ववदनुमेयम्। जीवाश्रयस्त्वनित्यः। अनित्योऽपि द्विविधः, जीवनपूर्वकःसुषुप्त्यादौ प्राणचेष्टालिङ्गगम्यः, तस्य च जीवनोद्भवत्वं परिशेषसिद्धमसाधारणकारणान्तरासंभवात्। इच्छादिपूर्वकस्तु मनोगम्यः। कार्यं चास्य शरीरचेष्टादि।

यद्यप्यात्मविशेषगुणनिरूपणस्य प्रकृतत्वात् प्रयत्ननिरूपणानन्तरं धर्मादिनिरूपणं युक्तम्; तथाप्यभियुक्तपरंपरागतोद्देशवाक्यानुसारेण गुरुत्वं निरूप्यते—गुरुत्वसामान्यसंबन्धं गुरुत्वम्। गुर्विदमिति विशिष्टविशेषणत्वं-तत्सामान्यव्यवस्थापकम्। ननु न गुरुत्वं गुणोऽस्ति, सामान्यमेव हि तज्जलभूम्याश्रितम्; न, गुरुत्वतारतम्यविरहप्रसङ्गात्। अतो गुरुत्वसामान्याश्रयो गुरुत्वाख्यो गुणोऽभ्युपेयः, शक्त्याश्रय इव। तच्च पतनकार्योन्नेयम्, न स्पार्शनागम्यम्। अन्यथोपरि स्पृष्टेऽपि घटे गुरुत्वदृष्टिःस्यात्। यत्तु मतम् लघुत्वं गुणस्तदभावो गुरुत्वमिति, तत्र फलादेः पतनकार्यानुपपत्तिः। न गुरुत्वात् पतनं, किन्तु द्रवद्द्रव्ययोगादिति चेन्न; शिलादेः पतनाभावप्रसङ्गात्। नच लघुत्वाभावः पतनादेः कारणमिति मानमस्ति, स्वेच्छामात्राच्च प्रसिद्धगुरुत्वापलापेऽतिप्रसङ्गः स्यात्। तस्माल्लघुत्वमेव गुरुत्वाभावः। तच्च पार्थिवाप्यपरमाणुगतं नित्यं, कार्यगतं तु कारणगुरुत्वपूर्वकम्। कारणनाशाच्च नश्यति। नच पार्थिवाणुषु गुरुत्वं पाकजं शङ्कनीयम्। आ [म] पाकाकृष्टेषु घटादिषु गुरुत्वातिशयादर्शनात्। यदि तुल्या सूक्ष्मोऽतिशयो लक्ष्यते सोऽपि सूक्ष्मजलावयवापक्षयादुपपत्स्यते।

द्रवत्वसामान्ययोगि द्रवत्वम्। तत्सामान्यस्य व्यवस्थाकं स्यन्दनधर्मासाधारणकारणत्वम्। नच काठिन्याभावो द्रवत्वम्; तूलपिण्डादावपि द्रवत्वप्रतीतिप्रसङ्गात्, स्यन्दनहेतुत्वादपि द्रवत्वं न काठिन्याभावोऽन्यथा तूलपिण्डादेरपि स्यन्दनकार्यं स्यात्। तच्च पृथिव्यादिभूतत्रयवृत्ति। तत्र जलस्य सांसिद्धिकम्, तद्ग्रावर्तकम्। विशेषगुणः। तत्परमाणुजु नित्यं, क्षितितेजसोः पाकजम्; कार्येषु कारणद्रवत्वपूर्वकम्। क्वचिदग्निसंयोगनाशान्नश्यति। क्वचिदाश्रयनाशात्।

स्नेहत्वाभिसंबन्धः स्नेहः। स्निग्ध इत्यत्र विशेषणत्वं स्नेहत्वसामान्यव्यवस्थापकम्। स च जलमात्रवृत्तिर्विशेषगुणः। संग्रहस्य हेतुः। तस्य च नित्यत्वानित्यत्वनिष्पत्तयो गुरुत्वस्येव द्रष्टव्याः॥

---

1. अयं घटः एतद्घटजनकानित्येच्छातिरिक्तेच्छाजन्यः कार्यत्वादित्यर्थः

संस्कारस्त्रिविधः ॥ वेगो भावना स्थितस्थापकश्चेति । त्रयाणामपि तत्तत्सामान्ययोगित्वं लक्षणं, वैधर्म्यं च । तत्र वेगो मूर्तेषु पृथिव्यादिभूतेषु मनः पञ्चमेषु जायते । तस्य क्वचित् नोदनजं कर्मासमवायिकारणम् , अभिघातजं च कर्म क्वचित् । अदृष्टवदात्ममनः संयोगजं तु कर्म मनोवेगस्य कारणं । क्वचित् पुनः वेगो वेगवद्भिः पूर्वपूर्वजलावयविभिरारभ्यमाणेष्ववयविषु कारणवेगपूर्वकः । स च सर्वत्रोत्तरक्रियाप्रबन्धहेतुः स्पर्शवद्द्रव्यसंयोगविरोधि । भावनाख्यस्त्वात्मविशेषगुणः । तस्यात्ममनःसंयोगोऽसमवायिकारणं, ज्ञानं तु निमित्तम् । पटुभ्यासप्रत्ययेभ्यस्तु पटुसंस्कारो जायते । अनुभूतेष्वर्थेषु स्मृतेः प्रत्यभिज्ञाया विपर्ययादेर्हेतुः जन्मदुःखादिविरोधिसद्भावे कश्चिदेव निवर्तते । कश्चित्पुनः भोक्तव्यकर्मवशात् जन्मानन्तरं समुद्बुद्धो भवति । अन्यथा जातमात्रस्येष्टसाधनस्मृत्यादिपूर्विका स्तन्यादौ प्रवृत्तिर्न स्यात् । अत एवोक्तम्— "सदृशादृष्टचिन्ताद्याः स्मृतिबीजस्य बोधकाः" इति । स्थितस्थापकस्तु स्पर्शवत्सु वर्तते । स च स्वाश्रयस्य पूर्वावस्थातोऽन्यथाभूतस्य पूर्वावस्थासंपादकोऽतीन्द्रियोऽतिशयः स्थितस्थापकोऽभिधीयते । तथा स्थापनव्यापारलिङ्गानुमेयः । तस्यापि नित्यत्वानित्यत्वनिष्पत्तयो गुरुत्ववत् द्रष्टव्याः ।

धर्माधर्मावप्यात्मविशेषगुणौ । तावतीन्द्रियौ श्रुत्याद्याप्तोपदेशगम्यौ । तयोराद्यः कर्तुः परंपरया ज्ञानद्वारा श्रेयो मोक्षाख्यं जनयति । प्रेयसश्च पुत्रादेः साक्षाद्धेतुः । द्वितीयस्तु साक्षात्परंपरया वा दुःखस्य हेतुः । तौ च श्रुतिस्मृतिशिष्टाचारविहितप्रतिषिद्धक्रियोपष्टब्धात्ममनःसंयोगजन्यौ । अन्त्यसुखदुःखसम्यग्ज्ञानविरोधिनौ ॥

शब्दो वियद्विशेषगुणः क्षणिकः । तत्रान्त्यः श्रोत्रग्राह्यः उपान्त्यादयस्तु नित्यानुमेयाः । शब्दजातीयः संयोगविभागशब्दजन्यः । तथाहि—स द्विविधः वर्णात्मकोऽवर्णात्मकश्च । अकारादिः वर्णात्मकः, भेर्यादि—ध्वनिरवर्णात्मकः तत्र वर्णोच्चारणेच्छानन्तरोत्पन्नप्रयत्नापेक्षादात्मवायुसंयोगात् वायुः ऊर्ध्वं गच्छन् कण्ठादिभिरभिहन्यते । तदभिघातसंयोगनिमित्तात् कण्ठाकाशसंयोगादसमवायिकारणात् वर्णोत्पत्तिः । भेर्यादिदण्डाभिघातनिमित्तात् भेर्याद्याकाशसंयोगासमवायिकारणात् भेयादिध्वनिरभिजायते । क्वचित्तु वेणुदलविभागात् वेणुदलाकाशविभागाच्चाद्यः शब्दो जायते । तदुत्तरे च शब्दाः शब्दजाः । पूर्वपूर्वशब्दादुत्तरोत्तरशब्दो वीचीसन्तानवज्जायते । इत्थमेवानित्यः शब्दः श्रोत्रसमवेतः प्रत्यक्षो भवति । अन्यथा शब्दोऽप्रत्यक्ष एव स्यात् । श्रोत्रशब्दयोः गमनाभावात्, सन्निकर्षाभावात् । कार्यशब्दाच्च कारणशब्दो निवर्तते । अन्त्यः शब्दस्तु कारणशब्दान्निवर्तत इति कल्प्यते । अन्यस्य नाशहेतोरभावादिति । इति गुणपदार्थः ।

अथ **कर्म** निरूप्यते— तल्लक्षणं तु कर्मत्वसामान्यवत्वं पूर्वमेवोक्तम् । संयोगविभागयोरसमवायिकारणजातीयत्वं च । कर्मत्वसङ्ग्राहकं चलतीति विशिष्टप्रत्ययविषये विशेषणत्वम् । ननु कर्मैव नास्तीति भूषणः । तत्कथं सामन्यवत्स्यात् । कथं वा संयोगाद्यसमवायिकारणजातीयं विशेषणं च भवेत् । कर्माभावे कथं चलतीति प्रत्ययः? इत्थं-संयोगविभागविभागसन्ततिष्वेव हि चलतीति प्रत्ययः[1], तथैवानुभवसिद्धः । संयोगविभागयोः किं कारणं? यत्ते कर्मणस्तदिति ब्रूमः । न च संयोगाद्यतिरिक्तकर्मसत्वे मानमस्ति ॥ उच्यते । चलतीति प्रत्यय एवात्र प्रमाणम् ।

---

1. मातरिश्वना संयोगादिसन्ततिमत्स्वेवचलनप्रतीते :

न च संयोगादिसन्ततिमानेवास्य विषयः। निष्प्रतियोगिविषयत्वात्। 'इदमनेन संयुज्यते'। 'अस्माच्च विभज्यते' इति हि संयोगादिप्रतीतिः सप्रतियोगिविषया। न चैवं शाखाग्रं चलतीति प्रत्ययः सप्रतियोगिविषयः। किञ्च संयोगादिसन्ततिमद्विषयश्चेच्चलतीति प्रत्ययः तदा स्तंभादावपि पिपीलिकासंयोगादिसन्ततियुते चलतीति प्रत्ययः स्यात्। तस्मात्कर्म पदार्थान्तरमभ्युपेयम्। तच्च पञ्चविधमुत्क्षेपणादिप्रकारैः पूर्वमुक्तं वक्ष्यते च। तेषां पञ्चानां साधर्म्यं कर्मत्वयोगः। एकद्रव्यवृत्तित्वं, क्षणिकत्वं, मूर्तद्रव्यवृत्तित्वं, गुरुत्वद्रवत्वप्रयत्नसंयोगवेगजजातीयत्वं, स्वकार्यसंयोगविरोधिजातीयत्वं, संयोगविभागयोरसमवायिकारणजातीयत्वं, स्वाश्रयेतरसमवेतकार्यारंभकजातीयत्वं, समानजातीयानारंभकत्वं, द्रव्यानारंभकत्वं, प्रतिनियतजातियोगित्वं, विशिष्टकार्यारंभकजातियोगित्वं च।

कर्मविशेषस्तु—शरीरावयवेषु तत्संबद्धेषु च यदूर्ध्वभाग्भिः संयोगकारणमधोभाग्भिश्च प्रदेशैर्विभागकारणं कर्मोत्पद्यते गुरुत्वप्रयत्नसंयोगेभ्यः तदुत्क्षेपणम्। तद्विपरीतसंयोगविभागकारणं कर्मापक्षेपणम्। ऋजुनो द्रव्यस्याग्रावयवानां तद्देशैः विभागे संयोगे च मूलप्रदेशैः येन कर्मणावयवी कुटिलो जायते तदाकुञ्चनम्। तद्विपर्ययेण संयोगविभागोत्पत्तौ येन कर्मणाऽवयवी ऋजुः संपद्यते तत्प्रसारणम्। यदनियतदिग्देशसंयोगविभागकारणं तद्गमनमित्येतत् पञ्चविधं कर्म, उत्क्षेपणत्वादि जातिभेदात्। अथ कस्माद्भ्रमणपतनप्रवेशा अपि कर्मभेदा जातिभेदान्नेष्यन्ते। जातिसङ्करप्रसङ्गादिति ब्रूमः। तथा हि—कूपे वंशपत्रादेरेकस्मिन्पतने भ्रमणपतनप्रवेशप्रत्ययात्तत्तज्जातीयानां भेदे सङ्करप्रसङ्गः स्यात्। अतोऽन्यत्रापि पतनादौ प्रत्ययभेदो न जातिभेदात्। किन्तु तद्देशसंयोगविभागहेतुत्वोपाधिभेदादिति द्रष्टव्यम्।

तत्रेत्थमुत्क्षेपणाद्युत्पत्तिः—यदाहि हस्तेन मुसलमुत्क्षेप्तुं इच्छा, तदनन्तरं प्रयत्नो जायते, तदपेक्षादात्महस्तसंयोगाद्धि हस्ते यदोत्क्षेपणं कर्मोत्पद्यते, तदा तत्प्रयत्नः तदपेक्षाद्धस्तमुसलसंयोगात् मुसलेप्युत्क्षेपणं जायते। तदा पूर्वेच्छाप्रयत्ननिवृत्तिरनन्तरं चापक्षेपणेच्छा ततः प्रयत्नस्तदपेक्षादात्मादिसंयोगद्वयाद्युगपद्धस्तमुसलयोरपक्षेपणकर्मणी भवतः। ततो वेगस्ततः उत्तराणि कर्मणि। ततोऽन्त्येन मुसलकर्मणोलूखलमुसयोरभिघाताख्यः संयोगः क्रियते। स संयोगो मुसलगतं वेगमपेक्ष्य मुसलेप्युत्पतनं कर्म करोति। तमेव पटुतरं वेगमपेक्ष्य मुसलहस्तसंयोगो हस्तेऽप्युत्पतनं कर्म करोति।

तथा पषाणप्रक्षेपणेच्छानन्तरं प्रयत्नस्तमपेक्ष्यात्महस्तयोर्हस्तपाषाणयोः संयोगाभ्यां पाणिपाषाणयोः युगपदाकर्षणकर्मणी जायेते; ततस्तदर्थे प्रयत्ने निवृत्ते पूर्वस्यां चेच्छायां पुनर्दिग्विशेषे प्रक्षेपणेच्छाप्रयत्नौ क्रमेण जायेते। प्रयत्नाच्च पाणिकर्म ततः पाणिपाषाणसंयोगो नोदनाख्यस्तस्माच्च पाषाणे कर्मोत्पन्नं नोदनापेक्षं तस्मिन्वेगमारभते, ततो वेगनोदनाभ्यां तावत्कर्माणि भवन्ति यावत्पाणिपाषाणविभागः, ततो विभागान्नोदने निवृत्ते वेगात् तदनुरूपाणि कर्माणि भवन्ति आपतनादिति। तथा ज्यानोदनेषु मोक्षणेच्छानन्तरं तदनुगुणः प्रयत्नः, ततः पाणिकर्म तत आत्महस्तसंयोगस्तस्माच्च प्रयत्नापेक्षात्पाणौ कर्म ततो हस्तज्याशरसंयोगानन्तरमात्महस्तसंयोगान्तरात्पूर्वप्रयत्नापेक्षात पाणावकर्षणम्, तदैव च हस्तज्याशरसंयोगेभ्यस्तत्प्रयत्नसापेक्षेभ्यो ज्याशरयोराकर्षणं जायते, तदैव च प्रयत्नविशिष्टं हस्तज्याशरसंयोगमपेक्ष्य ज्याकोटिसंयोगाभ्यां कोट्योर्धनुषि च कर्माणि जन्यन्ते। तदर्थाकर्षणात्पूर्वप्रयत्ने निवृत्ते शरमोक्षणेच्छातः प्रयत्नः। ततः कर्म

तस्मादात्माङ्गुलिसंयोगः तस्माच्च प्रयत्नापेक्षादङ्गुलिकर्म, ततोद्व्यङ्गुलिविभागः, तस्मात्संयोगनाशः, ततः प्रतिबन्धकाभावे धनुर्गतस्थितस्थापकमपेक्ष्य धनुर्ज्यासंयोगो ज्यायां कर्म करोति । तच्च स्थितस्थापकमपेक्ष्य ज्यायां वेगमारभते । तमपेक्ष्य ज्याकर्म शरनोदनं जनयति । नोदनादिषावाद्यं कर्म तन्नोदनापेक्षमिषौ वेगमारभते । वेगात्तु नोदनसहायात् तावत् कर्माणि भवन्ति यावदिषुज्याविभागः, विभागान्निवृत्ते नोदने कर्माण्युत्तरोत्तराणि पूर्ववेगादेवापतनाज्जायन्ते । कर्मणां बहुत्वकल्पने संयोगबाहुल्यं हेतुः । वेगस्त्वेक एव । वेगान्तरोत्पत्तौ कर्मणः सहकार्यभावात् । वाय्वादिषु तु गमनमेव, नोदनगुरुत्वद्रवत्ववेगप्रयत्नेभ्यः समस्तव्यस्तेभ्यो भवन्ति । यथायोगमुदाहरणं द्रष्टव्यम् । विस्तरभयान्न विपञ्च्यते । सर्गादौ कर्म, अग्नेरूर्ध्वज्वलनमौत्पत्तिकम्[1] । प्रतिमादिचलनं वायोस्तिर्यक्पवनं नोदनाद्यसंभवे जायमानं च कर्मादृष्टकृतम् । कर्मनाशस्तु उत्तरसंयोगात् । विनश्यदवस्थाश्रयं तु कर्माश्रयनाशान्नश्यतीति । संक्षेपतः कर्मपदार्थः समाप्तः ॥

सामान्यं नित्यमनेकवृत्ति स्वविषयसर्वगतम् । व्यावृत्तेषु निरुपाधिष्वनुगतबुद्धिनिमित्तम् । जातिरहितम् । तत्तूपाधिकल्पनया नापलपनीयमित्युपपादितं द्रव्यपदार्थे । तच्च द्विविधं उपाधिद्वैविध्यात्, परमपरं च । परं सत्त्वमधिकवृत्तित्वात् अपरं द्रव्यत्वादि न्यूनवृत्तित्वात् । तत्र परापरत्वप्रकारान्तरकल्पनमयुक्तम् । तृतीयोपाधेरभावात् । परत्वादेरुपाधिद्वयसमुदायः तृतीय उपाधिरिति चेन्न । पदार्थद्वयातिरिक्तस्य समुदायस्याभावात् । नचोपाधिद्वयवत्त्वमेकस्य दृश्यते इष्यते वा । तथात्वकल्पने चोपाधिकल्पनाया निरवधित्वात् न त्रिविधत्वमेव जातेः स्यात् । तस्मात् द्विविधमेव सामान्यं परमपरं च । तत्र सत्वं सामान्यमेव, न सामान्यविशेषः, सर्वसामान्यवद्व्यावृत्तबुद्धिहेतुत्वात् । अतोऽस्य द्रव्यादिभ्यस्तत्सामान्येभ्यश्चान्यत्वं सिद्धम् । यथा परस्परव्यावृत्तेषु चर्मवस्त्रकम्बलेष्वन्यद्रव्यसंबन्धान्नीलं नीलमिति प्रत्ययानुवृत्तिः, तथा परस्परव्यावृत्तेषु द्रव्यगुणकर्मस्वविशिष्टा सत्सदिति प्रत्ययानुवृत्तिः; अतो यत्संबन्धनिमित्ता सत्सदिति प्रत्ययानुवृत्तिस्तत्सत्वं द्रव्यादिभ्यो ऽन्यत्सामान्यमेव । एवं द्रव्यत्वादि ह्यऽन्यत् सामान्यमनुगतबुद्धिहेतुत्वात्, विशेषश्च, व्यावृत्तिबुद्धिकारणत्वात् । पदार्थान्तरत्वं च सामान्यस्य लक्षणभेदात् । नित्यत्वं च सर्वस्वाश्रयेषु युगपन्निरपेक्षवृत्तित्वात्,[2] भावत्वे सत्युत्पत्तिहेतुरहितत्वाच्च । सत्वादीनां परस्परान्यत्वं प्रत्यायकप्रत्याभ्यत्वभेदात्; प्रत्येकं स्वाश्रयेषु लक्षणाविशेषात् एकत्वम् । लक्षणं च निरुपाधिष्वनुगतप्रत्ययहेतुत्वमुक्तम् । यद्यपि अपरिच्छिन्नदेशानि सामान्यानि । तथाप्यभिव्यञ्जकव्यक्तिनियमात् स्वविषयसर्वगतानीत्युच्यन्ते । अन्तराले अभिव्यञ्जकाभावात् न विभाव्यन्त इति । इति सामान्यपदार्थः समाप्तः ॥

सामान्यशून्या अत्यन्तव्यावृत्तबुद्धिहेतवोऽन्त्या विशेषाः अन्त्यविशेषरहितत्वात्, विशेषाश्च स्वाश्रयस्य विशेषकत्वात् । कथमत्यन्तव्यावृत्तबुद्धिहेतवः? इत्थं-यथाऽस्माकं अश्वादिभ्यो गवादिषु गोत्वादिनिमित्ता व्यावृत्तबुद्धिः, तथाऽस्मद्विशिष्टानां योगिनां नित्येषु तुल्याकृतिगुणक्रियेषु परमाणुषु अन्यनिमित्तासंभवात् येभ्यो निमित्तेभ्यः प्रत्याधारं विलक्षणोऽयं विलक्षणोऽयमिति व्यावृत्तप्रत्ययो भवति तेऽन्त्या विशेषाः । आत्ममनस्स्वप्येवम् । नचात्मसु ज्ञानसुखादिविशेषनि-

---

1 दृष्टनिमित्तानपेक्षं केवलादृष्टनिमित्तम् ।

2. विमतं नित्यं कारणनिरपेक्षभावत्वादित्यर्थः।

मित्तो व्यावृत्तप्रत्ययः, मुक्तात्मसु तदभावप्रसङ्गात्। आकाशे तु शब्दाभावे[1]ऽपीतरेभ्यो व्यावृत्तिप्रत्ययः तन्निमित्तः। विशेषाणामिवात्मादीनां स्वत एव व्यावृत्तिबुद्धिः किं न स्यात्? अत्यन्ताविलक्षणत्वादिति ब्रूमः। नित्यद्रव्याणि हि तुल्य-जातिगुणक्रियावत्वात् अनुगतप्रत्ययभाञ्जि। विशेषाः पुनः न जात्यादिभाजोऽतोऽनन्यापेक्षयैव व्यावृत्तबुद्धिविषयाः। अन्यथा ते अन्त्या विशेषा एव न स्युः। एकैकशः प्रतिनित्यद्रव्यं वर्तन्त इति अनन्ताः। तत्समवायिनिमित्तविशेषकारण-क्लृप्तेरनुत्पत्तिमन्तः। स्वाश्रयनाशस्य समानाश्रयविरुद्धगुणोत्पत्तेर्वा नाशहेतोरभावात् नित्याश्चेति॥ इति विशेषपदार्थः समाप्तः।

अयुतसिद्धानां परस्परसंबन्धः समवायः, नित्यः सम्बन्धः समवाय इति वा लक्षणम्। नित्यत्वं च तस्य भावत्वे सत्य समवेतत्वादात्मवत्। असमवेतत्वं चास्यान्यथानवस्थाप्रसङ्गात्। तत्सिद्धिस्तु परिशेषात्। तथाहि-अयुतसिद्धानां आधाराधेय-भूतानामिहप्रत्ययः विषयमात्रसंबन्धनिमित्तः, इह प्रत्ययत्वादिह कुण्डे दधीति प्रत्ययवदिति संबन्धसिद्धिः। स न तावत् संयोगोऽयुतसिद्धानां परस्परसंबन्धत्वात्। अयुतसिद्धत्वं पुनराधाराधेययोः परस्परविभागायोग्यं स्वरूपम्। नापि संबन्धस्ता-दात्म्यम्। भिन्नानां व्यावृत्तानुवृत्तानां प्रत्यक्षाप्रत्यक्षाणां च तादात्म्यासंभवात्। अतः स संबन्धः समवाय इति सिद्धम्। स चैकः सर्वत्र इहप्रत्ययैकलिङ्गत्वात्, व्यावृत्तप्रत्ययाभावाच्च। भेदप्रत्ययस्तु द्रव्यादिव्यञ्जकभेदनिमित्तः। वृत्तिः पुनरस्य न संयोगोऽद्रव्यत्वात्, न समवायोऽनवस्थाप्रसङ्गात्। तस्मात् स्वात्मनैवास्य वृत्तिः न वृत्त्यन्तरमस्ति। अतः इन्द्रिय-सम्बन्धाभावात् अतीन्द्रियः, विशेषणविशेष्यसंबन्धादैन्द्रियकत्वेऽतिप्रसङ्गात्; तस्मादिहप्रत्ययलिङ्गैकगम्यः इति।

इति समवायपदार्थः समाप्तः॥

---

षडेवेत्थंपदार्था हि कणादेनोपवर्णिताः।
त एव गोतमेनोक्ता मानमेयादिरूपिणः॥
षोडशैव हि ते बुद्धिद्रव्यादिषु निवेशिनः।
तथान्यैरपि मानेन स्वमतं स्थापितं स्फुटम्॥

काणादाक्षपादमतवन्मीमांसकादिभिरपि हि स्वमतं मानत एव स्थापितम्। तथा हि-भट्टमते तावत् द्रव्यादयः, तेषां तादात्म्यम्, शक्तिश्चातीन्द्रिया, षट्प्रमाणानि, शब्दनित्यत्वादि च प्रमाणतो निरूपितम्। प्रभाकरनये तु पञ्च-प्रमाणतादि प्रमाणत एव स्थापितम्। सांख्यपातञ्जलयोरपि सत्वाद्याश्रयणम्। अन्ये तु क्षणिकान्यनन्तभेदभिन्नानि तत्वानि मानतो मन्यन्ते। शून्यं तत्वमपरे। चार्वाकैः पुनः भूतान्येव चत्वारि देहा एवात्मानोऽनन्ताः स्वीक्रियन्ते। दिगम्बरैस्तु

---

1. प्रलये इत्यर्थः

पृथिव्यादीनि भूतानि चत्वारि, तत्कार्याणि च शरीरादीन्यनन्तानि तत्वानि । शरीरपरिमिताः आत्मानोऽनन्ताः । ईश्वरश्च एकः, सर्वज्ञः, स्वीकृतः । किं बहुना तीर्थिकैरतीर्थिकैश्च भिन्ना एव पदार्थाः प्रमाणतः स्वीक्रियन्ते । तस्मात् न तात्त्विकमात्माद्वैतं, नापि विश्वं स्वप्नप्रपञ्चवन्मायाविलास इति सिद्धमिति ॥ इति पूर्वपक्षपरिच्छेदः ॥

अथ सिद्धान्तः

उच्यते तत्वतो नैवं पदार्थस्य विनिश्चयः ।
प्रमाणासंभवात् तस्मादद्वैतं तत्वमिष्यताम् ॥

यत्तावद्विधा द्रव्यादयः पदार्था इति मतम् । तदविचारसुन्दरव्यवहारगोचरमभ्युपेयम्, न तत्वगोचरम् । ननु प्रत्यक्षादिसिद्धस्यातात्विकत्वं विरुद्धम्; न, चन्द्रप्रादेशमात्रत्ववदविरोधात् । अबाध्यत्वात् भेदप्रपञ्चस्य न तत्तुल्यतेति चेत्; न, नेह नानास्ति किञ्चनेत्यादिबाधस्यात्रापि तुल्यत्वात् । किञ्चाबाध्यत्वमापातिकं, सार्वकालिकं वा, आहोस्वित् बाधागोचरत्व-मात्रम्? नाद्यः, असत्यप्यबाध्यत्वप्रसङ्गात् । नेतरः, सर्वदा बाधाभावस्य प्राकृतानवसेयत्वात् । बाधागोचरत्वमात्रमपि मानहीनम् । विमतं न बाधगोचरोऽविसंवादिव्यवहारगोचरत्वादात्मवदिति मानमिति चेन्न । ज्ञानादिमतो दृष्टान्तस्य साध्यविकलत्वात्[1] तदन्यस्य चात्मनस्त्वासिद्धत्वात् । अविसंवादित्वविशेषणस्य च पूर्ववद्विकल्पासहस्यासिद्धेः । अद्वैता-बाध्यताप्येवं शक्या निराकर्तुमिति चेन्न । अत्र बाधवैधुर्यापरपर्यायस्य सत्यत्वस्य "तत्सत्यमिति" श्रुतेः सिद्धेः ।

अपि च षडेव पदार्था इति मतं प्रमाणलोकप्रसिद्धिबाधितम् । तथा-हि दण्डी वनं सेनेत्यादयो दण्डाद्य-तिरिक्ता लोकवेदव्यवहारभूमयः प्रसिद्धाः । दण्डपुरुषतत्संयोगा एव दण्डिपदार्थः, एवं वनाद्यपि वृक्षादावन्तर्भवति, अतो न भावरूपः सप्तमः पदार्थोऽस्तीति चेन्न; अनुमानादिव्यवहारलोपप्रसङ्गात् । वह्निमानिति हि साध्यं, तच्चेत् वह्न्यादिस्वरूपं कथं न सिद्धसाधनता । विशिष्टानुमानासिद्धौ चेष्टसाधनतानुमानाधीनभोजनादिप्रवृत्त्यसंभवात् जीवनमपि ते दुर्लभ-मिति कृतं षट्पदार्थसमयाभिनिवेशेन । लक्षणाच्चानुमानविशेषात् द्रव्याद्यसिद्धेः न पदार्थनियमसिद्धिः । एतेन षट्पदार्था-न्तर्भूतषोडशपदार्थेऽन्तर्भावोऽपि व्याख्यातः । अथ पदार्थेतरेतराभावरूपो भेदो, व्यवहारो वा, लक्षणार्थ इति मतम्; न, अभावमात्रस्य व्यवहारमात्रस्य वाऽसाध्यत्वात् । विशिष्टस्य लक्षणसाध्यतापत्तेः ।

किञ्चेतरेतराभावस्यापि[2] लक्षणार्थत्वे भावाभावयोः परस्परमितरेतराभावात्तल्लक्षणं न स्यात् । तद्भावे चानवस्थाप्रसङ्गः । न चान्योभावरूपस्ते भेदोऽस्ति । पृथक्त्वगुणस्य च लक्षणार्थत्वे गुणादीनां निर्गुणानां लक्षणं न स्यात् । अपि च भेदस्य लक्षणगम्यत्वे मानान्तरगम्यता वाच्या, लक्षणं ह्यनुमानम् । तच्च क्वचिन्मानसिद्धमेवाग्न्याद्यन्यत्र प्रसाधयति । अन्य-थाऽप्रसिद्धविशेषणतादिदोषप्रसङ्गात् । भेदोऽपि कुंभादौ प्रत्यक्षसिद्धः पृथिव्यादौ लक्षणेन साध्यत इति चेन्न; भेदो हि प्रतियोगिग्रहसापेक्ष एव गृह्यते 'अस्मादस्य भेद' इति । धर्मिणो भेदेन दृष्टस्यैव च प्रतियोगिता । भेदादृष्टौ दूरस्थ-

1. उपहितस्य बाध्यत्वोपगमादित्यर्थः

2. व्यवहारवदित्यपेरर्थः ।

पर्वतपादपादेः प्रतियोगित्वादृष्टेः । तत्र प्रतियोगिभेदो धर्मिभेदादन्यश्चेदन्योन्याश्रयता । स एव चेदात्माश्रयता । किञ्च भेदो विशेषणतया विशेष्यतया वा गृह्यत इति नियमः न तु स्वरूपेणैव, तथाऽनुपलब्धेः, विशेषणविशेष्यभावश्च भेदेन गृहीतयोरेव दण्डपुरुषयोः प्रसिद्धः । सोऽपि भेद उक्तप्रकारेणैव गृह्यते इत्यपेक्ष्यमाणभेदग्रहानवस्थानात् न कश्चिद्भेदग्रहः स्यात् ।

स्यान्मतम् । सविकल्पकभेदग्रह एवायं नियमो न तु निर्विकल्पकभेदग्रहे । स हि युगपत्स्तंभकुंभतद्भेदानङ्गुलित्रयवत् निरपेक्षं गोचरयति । यत्तु मतं निर्विकल्पको भेदग्रहः प्रतियोग्यादिग्रहसापेक्षः, उत निरपेक्षो वा ? भेदग्रहत्वात् सविकल्पकभेदग्रहवदिति । तदसत्; वेदान्तिमते हि न निर्विकल्पको भेदग्रहोऽस्ति । यत आहुः—"आलोच्यते वस्तुमात्रं ज्ञानेनापातजन्मना" इति[1] । अतो धर्मिहेत्वोरसिद्धिरिति निष्प्रत्यूहो निरपेक्षनिर्विकल्पकभेदग्रहः । अतस्तत्सापेक्षः सविकल्पकभेदग्रहः किं न स्यात् ? विशेषणतयापि च ग्रहो भेदस्य स्वपरनिर्वाहकत्वादुपपद्यते । तदेवं निर्विघ्नो भेदग्रह इति । मैवम् । प्रक्रियामात्रत्वात्, नहि निर्विकल्पो भेदग्रहोऽस्तीत्यस्ति मानम् । निरपेक्षभेदग्रहनिषेधकानुमानं च भवतैव दर्शितम् । तच्च भवन्मते निरवद्यम् । यत्तु स्वपरनिर्वाहकत्वेन भेदस्य विशेषणतया च ग्रहोपपादनम्; तदसत्; नहि तावत् स्वनिर्वाहकत्वमत्र स्वभिन्नताकारणत्वं भेदस्य । भेदाभावे भिन्नत्वस्य वाचारंभणमात्रत्वात् । नापि स्वभिन्नत्वव्यवहारहेतुत्वम् । भिन्नत्वाभावे तद्व्यवहारस्य निरालम्बनस्यासंभवात् । अविद्याध्यासस्य त्ववस्तुत्वान्नानुपपत्तिः । स्वस्त्ययनत्वादेवोपपत्तिः । तस्मात् वस्तु किञ्चित्स्वपरनिर्वाहकमिति तार्किकम्मन्यस्य मतम् , न न्यायविदाम् । तदेवं कुंभादिभेदो न मानगोचर इति न क्वापि भेदो लक्षणगम्यः । अथ पृथिवीत्वं तोयादेः पृथिवीव्यक्तीनां भेदं व्यतिरेकव्याप्त्या साधयति । तथाहि प्रयोगः-पृथिवीत्वमबादिभ्यो भिन्नानेकपृथिवीव्यक्तिमात्रनिष्ठं, पृथिवीशब्दवाच्यत्वात् तोयत्ववत् इति व्यतिरेकी । एवमात्मत्वादिनाप्यात्मादिभेदो लक्षयितव्यः । नचाप्रसिद्धविशेषणता दोषः । तस्याःकेवलव्यतिरेकिणो भूषणत्वात, साध्यप्रसिद्धौ हि व्यतिरेकव्याप्त्यसंभवः । दूषणान्तरविरहस्त्वतिरोहित एव । अथ वा लोकप्रसिद्धं कुम्भादिभेदमाश्रित्य भूगोलकादेः समुदायस्य तोयादिभ्यो भेदो लक्षणतः साध्यते। न च भागे सिद्धसाधनता। समुदायस्यैव धर्मित्वात् । न चैवं भागे सिद्धसाधनताया विलोपः । प्रत्येकमनेकेषां धर्मित्वे तदुपपत्तेः । इत्थमेव पृथिव्यधिकारे लक्षणमाहोदयनः 'प्रसिद्धिसिद्धं च कुम्भादिभेदमाश्रित्यात्मनां परस्परं भेदोऽप्यनुमातुं शक्यः । प्रयोगस्तु अपरोक्षज्ञानं वर्तमानपरोक्षज्ञानाश्रयात् भिन्नाश्रयं परतन्त्रत्वे सति अपरोक्षत्वात् रूपवदिति । असिद्ध्यादिविरहस्तावदतिरोहितः । पक्षवृत्त्यादेःस्पष्टत्वात् । तस्मान्निष्प्रत्यूहं लक्षणादिना भेदसाधनमिति । [1]उच्यते । न तावदत्यन्ताप्रसिद्धसिद्धिर्लक्षणतो वास्तवी संभवेत्, अप्रसिद्धविशेषणतादूषणापत्तेः; तददूषणत्वे च शशविषाणानुमानादिवल्लक्षणतो न वस्तुविश्वासःस्यात् । यथा हि भूमिरियं शशविषाणोल्लिखिता, भूमित्वात् गगनवत् इत्यनुमानान्न वस्तुविश्वासः, तथा लक्षणादपि न वस्तुभेदविश्वासः स्याद्भेदस्यापि ह्यसिद्धावत्यन्तासत्वाशङ्का केन वार्येत । न च सजातीयभेदोऽत्यन्ताप्रसिद्धो लक्षणतः सिद्ध्यति ॥

तथाहि-द्रव्यत्वपृथिवीत्वादिकं जातिरौपाधिकं वा । आद्येऽन्योन्याश्रयता, सिद्धे हि व्यक्तिभेदे तद्गतानुगतजातिसिद्धिः, तत्सिद्धौ च व्यक्तिभेदसिद्धिरिति । द्वितीये त्वसिद्धिः, नहि षट्पदार्थवादिनः औपाधिकं मानसिद्धमस्ति । यैस्तु तदभ्युपगम्यते

1. अचेत्यमानो भेदोऽपि चकास्तीत्यतिसाहसम् इत्युत्तरार्धः ।

तेषामपि कथमस्यासजातीयभेदसिद्धिः। एकस्यापि ह्याकाशस्याकाशत्वमौपाधिकमिष्यते। यदपि कुम्भादिभेदसिद्धिमभ्युपगम्य समुदायस्य भेदसाधनं, तत्रापि भागे सिद्धसाधनता, नहि ते समुदायिभ्योऽन्यः समुदायोऽस्ति। कुम्भादीनां च समुदायिनां केषांचिद्भेदसिद्धिः इष्यते। उपाध्यवच्छिन्नास्त एव समुदायः धर्मीति चेन्न, औपाधिकस्यापि त्वयाऽनभ्युपेतत्वात्, उपाधितत्संबन्धयोश्च धर्म्यन्तर्भावे बहिर्भावे[1] वा सिद्धसाधनतापत्तेः। येषामपि समुदायो वस्त्वन्तरमस्ति तेषामपि कुम्भादिभेदवत् समुदायभेदसिद्धेः सिद्धसाधनता। कुम्भादिभेदासिद्धौ चाप्रसिद्धविशेषणत्वम्।

यदप्यात्मभेदेऽनुमानमुक्तम्। तदपि वार्तं; सिद्धसाधनत्वादपरोक्षज्ञानं हि भवता बुद्धिरूपमिष्यते। तच्चास्माभिरपि वर्तमानपरोक्षज्ञानाश्रयाद्भिन्नाश्रयमिष्यते। संवेदनमेवास्तु धर्मीति चेन्न; त्वत्पक्षे तस्य बुद्धेरव्यतिरेकात्। [2]यन्मते बुद्ध्यव्यतिरिक्तं संवेदनं तन्मतेऽपि प्रमातृगतं प्रमेयगतं वा, प्रमाणफलं हि तदतः सिद्धसाधनमेव[3]। ननु प्रमातैवात्मा "नान्योऽतोऽस्ति द्रष्टेति"श्रुतेः, अतस्तद्भेद उक्तानुमानादेव तवापि सिद्धोऽतो न सिद्धसाधनता; न, प्रमात्रादिभेदस्यौपाधिकत्वादात्मैव हि बुद्ध्याद्युपाध्यवच्छिन्नः प्रमात्रादिभेददशामाविशति, यथा परस्याकाशः श्रोत्रभेददशाम्। तथाहि शास्त्रम् "सधीः स्वप्नो भूत्वेमं लोकमतिक्रामति" "रूपं रूपं प्रतिरूपो बभूव" "इन्द्रो मायाभिः पुरुरूप ईयते" इत्यादि आत्मनः औपाधिकद्रष्ट्रादिरूपमाह। नचेदं वास्तवं रूपम्। "एकमेवाद्वितीयं" "नेह नानास्ति किञ्चन" "नेति नेति" "अपूर्वमनपरमनन्तरम्" इत्याद्यागमविरोधात्। तस्माद्द्रष्ट्रादिरूपमौपाधिकमनेकविधमात्मन इति सिद्धं सिद्धसाधनमुक्तानुमाने। "एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा। कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च"। "एक एव तु भूतात्मा भूते भूते व्यवस्थितः। एकधा बहुधा चैव दृश्यते जलचन्द्रवदि" त्यादिश्रुतिस्मृतिविरुद्धम्। प्रतिप्रयोगविरुद्धं च। तथाहि आत्मवित्पूज्यचरणप्रणीतः प्रयोगः—

"ऐकात्म्यवन्तो देहास्स्यु र्विवादो येषु वर्तते।
शरीरत्वाविशेषत्वात् प्रतिवादिशरीरवत्" इति।

ननु किमेकस्यैवात्मनः सर्वदेहसंबन्धः साध्यः, किंवैकस्यात्मनः? आद्ये साध्यशून्यो दृष्टान्तः। प्रतिवादिशरीरस्याप्यनेकात्मसंबन्धित्वात्। द्वितीये सिद्धसाधनता, एकैकस्यात्मनः सर्वगतत्वाभ्युपगमात्। अथ विवादपदानि शरीराणि प्रतिवाद्यात्मनो भोगायतनानि भोगायतनत्वात् प्रतिवादिशरीरवदिति प्रयोगः। न, भोगतदायतनत्वयोश्चिन्त्यत्वात्। सुखदुःखसाक्षात्कारो भोग इति चेत्; स किमुभयविषयः एकैकविषयो वा? सर्वथापि भोगलक्षणस्याव्याप्तिः। अथान्यतरसाक्षात्कारो भोगः तथाप्यव्याप्तिः, सुखदुःखयोर्हि विनश्यदविनश्यदवस्थयोः युगपत्साक्षात्कारो नित्यानुभवात् त्वयेष्यते। उक्तभोगायतनत्वं चाचेतनस्य शरीरस्य भवतापि नेष्यते। अतो बाधो, हेत्वसिद्धिः, दृष्टान्तस्य साध्यसाधनविकलता च। तदेवं न सत्प्रतिपक्षता आत्मभेदानुमानस्य। नापि 'एको देव'इत्याद्यागमेन बाधः, तस्येश्वराभेदपरत्वादिति।

---

1. अन्तर्भावे सिद्धसाध्यता, बहिर्भावे च कुम्भादीनामपि धर्मित्वादुक्तदोषतादवस्थ्यम्।
2. भट्टमते
3. विषयनिष्ठत्वादिति भावः।

**उच्यते।** यत्तावदेकात्मत्वसाधने सिद्धसाधनताद्युक्तम्; तत्तावदसत्, प्रतिवाद्यात्मना हि तादात्म्यं विवादपदेषु शरीरेषु साध्यते। नच तत्परस्य सिद्धम्। अतः कथं सिद्धसाधनता। तथा न दृष्टान्तस्य साध्यविकलता, प्रतिवादिशरीरे हि तदात्मना तादात्म्यं परेणाभ्युपेयम्। अन्यथा 'अहं मनुष्य' इति समानाधिकरणव्यवहारस्तत्र न स्यात्। न चासौ नास्त्येव, लोकप्रसिद्धत्वात्। स गौण एवेति चेन्न, तद्व्यापकरहितत्वात्। भेदप्रत्ययपुरस्सरो हि गौणो व्यवहारः प्रसिद्धः, न चात्मशरीरयोः भेदप्रत्ययोऽस्ति; अतो नात्र तादात्म्यव्यवहारो गौणः। भेदज्ञानं विनापि तादात्म्यव्यवहारो गौणः स्यादिति चेन्न; भ्रमगौणशब्दयोः अर्थाविशेषे पर्यायत्वप्रसङ्गात्। तस्मादस्ति प्रतिवादिदेहे तदात्मना मुख्यं तादात्म्यम्। न द्वयोस्तादात्म्यं क्वचिद्भ्रमसिद्धमप्यस्तीति चेन्न, शरीरात्मभावस्य प्रसिद्धिसिद्धस्यापह्नवासंभवात्। किं चाविचारसुन्दरव्यवहारगोचरमाश्रित्यानुमानप्रयोगः तार्किकैरपीष्यते। अग्निमत्त्वादिधर्मो हि तार्किकाणां व्यवहारमात्रसिद्धो न वास्तवः, अग्न्यादिविशिष्टस्यानिष्टत्वात्। विशेषणविशेष्यतत्संबन्धा एव विशिष्टं वस्त्विष्टमिति चेन्न, अग्न्यादिस्वरूपमात्रसाधने सिद्धसाधनतापत्तेः। तस्माद्व्यवहारमात्रसिद्धमप्यनुमानाङ्गमिति सिद्धम्। अतः प्रतिवादिशरीरं तदात्मना-तादात्म्यवत्, जीवच्छरीरत्वादिति न दृष्टान्तस्य साधनविकलतापि। तथापि विपक्षे किं बाधकमिति चेत्; जीवनमेवेतरशरीरेषु न स्यादिति ब्रूमः। न तावदात्मान्तरेण तत्र जीवनोपपादनमात्मभेदासिद्धेः। प्रपञ्चितश्चात्मादिभेदे प्रमाणाभावः। तत्र संप्रतिपन्नेनात्मनाऽऽत्मवत्त्वं चेन्नेष्यते, तदा जीवनमेवेतरशरीरेषु दुर्घटमापद्येत। तस्मादाद्यो निरवद्यःप्रयोगः।

**यदपि** द्वितीयप्रयोगे भोगासंभवाभिधानं, तदप्यसत्। भोगो हि कर्मफलतुल्यवृत्तिः तत्साक्षात्कारः, शरीरस्य च भोगायतनत्वं लोकप्रसिद्धिसिद्धम् अनुभवसिद्धं च। 'शरीरे मेऽद्य दुःसहं दुःखसंवेदनम्' इति। अतो न दृष्टान्तस्य साध्यसाधनविकलता। नापि हेत्वसिद्धिः। ननु लोकप्रसिद्धिसिद्धोऽप्यर्थोऽप्रामाणिको नानुमितिहेतुः। अन्यथा धूमाभासस्यापि तथात्वप्रसङ्गात्; न, अप्रामाणिकस्यापि व्याप्यस्यानुमितिहेतुत्वोपपत्तेः। अन्यथा जले चन्द्रस्य वियच्चन्द्रानुमितिहेतुत्वं न स्यात्। तदेवं द्वितीयोऽपि प्रयोगो निरवद्यः। यदपि "एको देवः" इत्याद्यागमस्येश्वरपरत्वमुक्तं, तदनुगुणमेव: ईश्वरस्य सर्वात्मत्वाभ्युपगमात्। तथा च श्रुत्यन्तरम्—"यत्साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरः" तथा "एष त आत्माऽन्तर्याम्यमृतः" "अयमात्मा ब्रह्म" "तत्त्वमसि" इत्यादि। तटस्थेश्वरविषयमानासंभवश्च वक्ष्यते। तदेवं न लक्षणतो नापि प्रत्यक्षानुमानान्तराद्वा पारमार्थिकभेदसिद्धिः। नापि व्यवस्थानुपपत्तितो भेदः सिध्येत्। अन्योन्याश्रयतापत्तेः, भेदसिद्धौ व्यवस्थानुपपत्तिसिद्धिः तत्सिद्धौ भेदसिद्धिरिति। तस्माच्चन्द्रेन्द्रजालगतभेदबोधवत् द्रव्यादिभेदबोधोऽपि मिथ्यैवेत्यास्थेयम्॥

यदपि लक्षणेनेदमित्थं व्यवहर्तव्यमिति साध्यत इति मतम्; तदपि परमार्थाद्वैतमतस्याप्रत्यनीकम्। तन्मतेऽप्यविचारितसुन्दरव्यवहाराभ्युपगमात्। [1]किञ्च द्रव्यादिव्यवहारसिद्धौ सिद्धसाधनता। तदसिद्धावप्रसिद्धविशेषणता, व्याप्तिविरहः, दृष्टान्तस्य साध्यविकलता च। अत एव न व्यवहारयोग्यतापि साध्या। तद्योग्यतायाः व्यवहारोन्नेयत्वात् उक्तदोषप्रसङ्गात्। अपि च न योग्यता ते वस्त्वतिरिक्ताऽस्ति। अतो धर्मिस्वरूपस्य साध्यत्वे अपक्षधर्मता। द्रव्यत्वादिधर्म एव द्रव्यादिव्यवहारयोग्यतेति चेन्न, साध्याविशिष्टताप्रसङ्गात्। तस्मात् द्रव्यादिषट्पदार्थव्यतिरिक्तं लोकप्रसिद्ध-

---

1 प्रागेव लक्षणप्रवृत्तेर्व्यवहारसिद्धिरसिद्धिर्वा?नाद्य इत्याह - **किंचेति**

विशिष्टदण्डचादिसमूहवनसेनादिशक्तिभेदतादात्म्याद्यपलपतो न लक्षणतोऽन्यतो मानाद्वा पदार्थभेदस्तात्त्विकोऽन्यो वा व्यवहारः कश्चिदपि सिध्यतीति सिद्धम्। येत्वनियतपदार्थवादिनो विशिष्टं विशेषणादिभ्यस्तत्वान्तरमिच्छन्ति। तेषामप्यनुमानाद्यसंभव एव दोषः। यदि हि विशिष्टं पर्वतादेर्वह्नेस्त्वन्तरं, तदा विशिष्टद्वयधर्मयोरभिन्नत्वधूमवत्वयोः व्यधिकरणत्वादव्याप्तिः[1]। धूमवत्वस्य चापक्षधर्मता। विशिष्टविशेष्ययोः भेदवदभेदस्यापि भावान्नोक्त दोष इति चेत्; न, तत्र किं भेदकरूपादूरूपान्तरेणान्यसमादभेदः, किं वा भेदकरूपेणैव? आद्ये एकरूपांतरेणाभेदेऽपि न धर्म्यादिभेदप्रयुक्तो दोषोऽपास्तः स्यात्, अन्यथा न क्वापि व्यधिकरणतादिदोषो भवेत्। द्वितीये नु तादृगभेदे मानहीनतैव दोषः। तथाहि, न तावदत्र प्रत्यक्षं मानम्। तदपरोक्षसंवेदनाभावात्। नाप्यनुमानम्। साध्याप्रसिद्धेः। अत्यन्तप्रसिद्धेन विना विशिष्टानुपपत्तेरसिद्धेर्नार्थापत्तिरपि। अथात्यन्तभिन्ने अभिन्ने च सामानाधिकरण्यानुपपत्तिरत्र मानम्। न, अन्योन्याश्रयतापत्तेः अत्यन्तभिन्नाभिन्नादिविशिष्टानुपपत्तिसिद्धिर्हि भिन्नाभिन्नसिध्यायत्ता तत्सिद्धिरपीतरसिद्ध्यायत्तेति। सामानाधिकरण्यं तु अभिन्न एवोपाधिकल्पितभेदे संगच्छते, यथा घटाकाशो महाकाश इति। अथ न पर्वतादेरग्न्यादिविशिष्टं तत्वान्तरम्; किन्तु पर्वतादिरेवाग्न्यादिसंबन्धादग्न्यादिमानिति विशिष्टदशामाविशति, अतो नोक्तदोष इति चेत्; न, संबन्धाधीनतया विशिष्टसिद्धौ संबन्धहीनयोः समवायतादात्म्ययोरप्यविशिष्टत्वापत्तेः। ततः संयोगसंयोगिनोरपि विशिष्टत्वासिद्धिप्रसङ्गः। अथ पर्वतादिः विशेषणविशेष्यतासंबन्धमपेक्ष्य विशिष्टो भवति, न संबन्धान्तरमपेक्षत इति मतम्; न, संबन्धनिरपेक्षत्वे विशेषणविशेष्यभावस्यानियमप्रसङ्गात्। तदेवं न तत्वतः पदार्थभेदोऽनुमानादिव्यवहारो वा संभवी। ननु—अनुमाननिषेधे निषेधकानुमानस्यापि निषेधात् व्याघात आपतेत्। न हि निषेधोक्तिमात्रात् निषेधसिद्धिः, अतिप्रसङ्गात्। अतोऽनुमानादेवानुमानमपलपनीयमिति स्फुटो व्याघातः। किञ्च पदार्थसाधर्म्यवैधर्म्यनिरूपणमात्मानात्मविवेकायोपयुज्यते। अत एवोक्तं "पदार्थधर्मसंग्रहः प्रवक्ष्यते महोदयः" इति (प्रश. भा. १-१.)। अनुमानादिनिरूपणपरा वा आन्वीक्षिकी तर्कविद्या मननरूपा। यथाह उदयनः—

"न्यायचर्चेयमीशस्य मननव्यपदेशभाक्।
उपासनैव क्रियते श्रवणानन्तराऽऽगता"॥

इति। (कुसु १. ३.) अनुमानाधीनं च शब्दशक्त्यवधारणम्। तत्सापेक्षं च वाक्यार्थावधारणं श्रवणं प्रसिद्धम्। श्रवणमनने च तत्वज्ञानसाधने। तथाहि शास्त्रम्—"आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्य" इति। तस्मात् वैशेषिकादिशास्त्रं न निराकरणीयं मुमुक्षुभिः। किन्तु यत्नादादरणीयमिति। उच्यते—न तावत् व्याघातापत्तिः न ह्यस्माकमपि विशिष्टसाध्याद्यसंभवो येन निषेधकानुमानं न संभवेत्। तथाहि—लोकप्रसिद्धाः दण्डचादिपदार्थास्तथैवास्माभिराश्रिताः। न तु द्रव्यादयः षडेव। तस्मान्निषेधकानुमानोपपत्तेः न व्याघातशङ्कावकाशः। नाप्यात्मानात्मनिरूपणं तात्त्विकषट्पदार्थनिरूपणसापेक्षम्। लोकप्रसिद्धव्याप्त्यादिबलेनैव तदुपपत्तेः। नहि कणादादिमते कश्चिदपि व्यवहारः संभवतीत्युक्तम्। अत आत्मादिनिरूपणं न तन्मतमपेक्षते। वेदार्थविरुद्धविषयत्वाच्च न तन्मतं मुमुक्षुभिरादरणीयम्।

---

1. व्याप्त्यसिद्धिः पर्वते तयोरभावात्

2 A अतः [व्या. पाठः]

किन्तु निरसनीयमेव। निरर्थकत्वाच्चोपेक्षणीयम्। तथा हि भारते वचनं प्रसिद्धम्—"आन्वीक्षिकीं तर्कविद्यामनुरक्तो निरर्थिकाम्" इति।

निषिद्धत्वाच्च; तथा हि कपिलकणादबौद्धादिमतनिराकरणपक्षपातमतिदेष्टुं "एतेन शिष्टापरिग्रहा अपि व्याख्याता" इति वैयासिकं सूत्रम्। "तर्काप्रतिष्ठानात्" इति च॥

एवं कर्मकाण्डप्रसिद्धमपि यद्वेदान्तविरुद्धं तदेव त्याज्यम्। कर्माणि पुनः अतात्विकभेदाश्रयाणि अधिकारार्थमपेक्ष्यन्ते। तस्मादुक्तनीत्या कणादादिमतेषु न मानतस्तात्त्विकी पदार्थभेदसिद्धिरिति सिद्धम्। इतरत्र तु सुतरां न तत्वशुद्धिः। यस्य तावत् स्वरसभङ्गुरं शून्यं वा तत्वं स स्वयं तथाभूतः कथमिदमित्थं तत्वमिति व्यवस्थापयेत्। अथातात्विकं सांवृतसत्वसन्तानमाश्रित्य सर्वो व्यवहारः प्रवर्तत इति मतम्। तदसत्। सन्तानस्यार्थक्रियाकारित्वे ज्ञानवत्सत्वप्रसङ्गात्। शून्यमते तु निरधिष्ठानस्य सांवृतव्यवहारस्यासंभवात्, सांवृतस्य च सत्वाभ्युपगमे गतं बौद्धसिद्धान्तेन। यस्य तु प्रत्यक्षमेव मानम् तस्य जीवनमपि दुर्लभम्। दूरे तत्वव्यवस्थापनम्। तथा हि, भोजनादिजीवनसाधनत्वस्याप्रत्यक्षस्यासिद्धेः न भोजनसाध्यं जीवनमपि चार्वाकवराकस्य संभवेत्। तथाच सति कथय कथं ते तत्त्वव्यवस्था। दिगम्बरैस्तु तत्त्वमनियतमेवाश्रितम्। स्यादस्ति स्यान्नास्तीति तत्त्वस्याभिहितत्वात्। तथा च सति तेषां सर्वत्राऽनैकान्तताभ्युपगमात् न किञ्चित् तत्वं नियतं स्यादिति वावदूकतैव भवेत्। तस्मान्न द्वैतमते वस्तुतत्वनिर्णयः संभवति। अतः समस्तभेदोपप्लवरहितं चैतन्यैकरसमात्मस्वरूपं ब्रह्मैव तत्त्वम्। भेदप्रपञ्चःस्वप्नवदविद्यामय इति श्रुतिन्यायकोविदैरभ्युपगन्तव्यम्। तथा च शास्त्रं ब्रह्म प्रक्रम्य पठ्यमानम् "एकमेवाद्वितीयं", "नेह नानास्ति किञ्चन," "मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति," "न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्पश्येत्" "सलिल एको द्रष्टाऽद्वैतो भवति" इति च ब्रह्मणोऽद्वितीयत्वं, तथा "प्रज्ञानं ब्रह्मे"ति चैतन्यकरसतां, "तत्वमसि" "अयमात्मा ब्रह्मे"ति चात्मस्वरूपतां बोधयति। तस्य चानेकविधत्वमविद्यातत्कार्योपाधिभेदसंबन्धादारोपसिद्धं स्फटिकस्येव न तात्विकं, "इन्द्रो मायाभिः पुरुरूप ईयत" इति श्रुतेः। "एक एव तु भूतात्मा भूते भूते व्यवस्थितः। एकधा बहुधा चैव दृश्यते जलचन्द्रवत्" इति स्मृतेश्च।

तथाहि—विकारहीनस्यासङ्गस्यापि ब्रह्मणो मायाशक्तिबलात्कारणता। "मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्" इति श्रुतेः। स्वाध्यस्ताशेषाविद्यातत्कार्यावच्छेदरूपाभासोपाधौ च विश्वसाक्षिता। "तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति," "कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च" इति श्रुतेः। यत्तु तटस्थेश्वरस्य स्वसमवेतज्ञानात् सर्वज्ञतेति मतम्। तदसत्। ज्ञानज्ञेययोः संबन्धासंभवात्, साक्षात्संबन्धाभावेऽपीश्वरसंबन्धद्वारा सर्वं ज्ञानसंबन्धमिति चेत्; न, पश्वादेरपि सर्वज्ञताप्रसङ्गात्। पारमार्थिकसंबन्धकल्पनं चेश्वरस्य "असङ्गो ह्ययं पुरुषः" "असङ्गो नहि सज्यते" "अत्यतिष्ठद्दशाङ्गुलम्" इत्यागमविरुद्धम्। न च तटस्थेश्वरसिद्धिः संभवति। नह्यागममन्तरेणेश्वरसद्भावे मानमस्ति। आगमश्च प्रपञ्चानन्यभूतं भूतयोनिमाह न तटस्थम्। "सदेव सोम्येदम्" "ब्रह्मैवेदं विश्वम्" इत्यादि हि श्रूयते। असङ्गागमादेव तटस्थेश्वरसिद्धिरिति चेन्न। परमार्थाद्वितीयतया असङ्गस्य ताटस्थ्यासिद्धेः। द्वितीयापेक्षया हि ताटस्थ्यं सिद्ध्यति। प्रपञ्चतादात्म्येऽसङ्गता विहन्येत इति चेत्; न, अध्याससिद्धतादा-

त्येन पारमार्थिकासङ्गताऽव्याहतेः। नहि मरुमरीचिकाजलेन मरुभूमिरार्द्रीक्रियते। तथाहुराचार्यास्तत्वविदः—"यत्र यदध्यासः तत्कृतेन दोषेण गुणेन वा अणुमात्रेणापि स न संबध्यत" इति। (ब्र.सू.भा. १-१-१)

ननु सकर्तृत्वानुमानादेव कुलालवत् तटस्थेश्वरः सिद्ध्यति। तथाच प्रयोगः—विमतं सकर्तृकं कार्यत्वात् कुंभवदिति, न उक्तोत्तरत्वात्। उक्तं हि विशिष्टस्य साध्यस्य विशेषणाद्यनतिरेके सिद्धसाधनत्वम्; अतिरेके च साधनस्य व्याप्तिराहित्यमपक्षधर्मत्वं च। एतेन प्रयोगान्तराण्यपि निरस्तानि। विमतमिति च धर्मिनिर्देशो यदि सकर्तृकाकर्तृकविवादमात्रविषयगोचरस्तदाऽऽकाशादिभागे ते बाधस्तस्याप्युक्तविवादविषयतया धर्मिभागत्वात्। यत्तु अनादिप्रसिद्धाकर्तृकादन्यदिति धर्मिनिर्देशः; तदर्थेऽपि नावयोः संप्रतिपत्तिराकाशादेरनादित्वे विप्रतिपत्तेः। अथ यत्राकर्तृकत्वं ते संमतमस्माकं त्वसंमतं स वेदो धर्मीति चेन्न उपान्त्यादिभागस्यासिद्धेः। किञ्च वेदादेः सकर्तृकत्वसिद्धावपि नेश्वरसिद्धिः। नहि कर्तृसिद्धिरेव तत्सिद्धिः। पक्षधर्मताबलेन नित्यज्ञानादिमत्सिद्धिरेव तत्सिद्धिरिति चेत्। नहि। साध्यव्याप्तस्य हि साधनस्य पक्षधर्मता साध्यमात्रस्य पक्षधर्मतां साधयति। न साध्यस्य विशेषमणुमात्रमपि। न हि हिमवतो धूमवत्वं शीतालाग्निमत्तां साधयति।

यत्तु वाममतानुसारिणा मानमनोहरेण प्रलपितम्—अयं घटः एतद्घटजनकानित्यज्ञानेतरज्ञानजन्यः कार्यत्वात्पटवदिति। तद्विपक्षबाधकतर्काभावादतिप्रसङ्गपराहतत्वाच्च शङ्किताप्रयोजकम्। तथा हि—मानमनोहरकर्तृशरीरम् एतज्जनकागर्दभेतरजन्यं कार्यत्वात्कुम्भवत् इत्यपि तेनानुमीयेत[1]। विशिष्टं च साध्यं तस्याप्रसिद्धम्। प्रपञ्चितं चैतत् रत्नदीपावल्याम्। अतो न विपञ्च्यते। तस्मात् न तटस्थेश्वरसिद्धिः मानतः संभवति। अतो विश्वं स्वात्मन्यध्यस्तं प्रकाशात्मा साक्षादीक्षत इति विश्वसाक्षीति सिद्धम्। तथा स एवाविद्याध्यस्थान्तस्थः सन् अविद्यादियमनादन्तर्यामीति निश्चीयते, "यः पृथिव्यां तिष्ठन्" इत्यादि शास्त्रात्। स एव च समस्ताविद्याकार्यभूतसूक्ष्मतत्कार्योपहितो मिथ्यैव तदभिमानी समष्टिरूपो जीवो हिरण्यगर्भः सूत्रात्मेति चोच्यते। स एव पञ्चीकृतसमस्तभूततत्कार्योपहितः समष्टिरूपो विराडुच्यते। तथा स एव बहुविधदेहभेदोपाध्यवच्छिन्नो जीवः, क्षेत्रज्ञः, प्राणी कर्ता भोक्तेत्यादिसंसारदशामाविशति। इदमुक्तं भवति—प्रत्यग्रूपमद्वितीयं तत्वतो वस्तु तस्य रूपान्तरमविद्यातत्कार्योपाधिकं स्फटिकस्येवातात्विकमिति। ननु अद्वितीयं सदपि प्रमाणाद्यभावादविषयत्वाच्च सिद्धमसत्समम्। न च काल्पनिकी तत्सिद्धिर्वस्तुतोऽसिद्धिप्रसङ्गात्; न, स्वप्रकाशतया स्वरूपसिद्ध्युपपत्तेः। किञ्चातात्विकात्प्रतिबिम्बात्बिंबतत्वसिद्धिवदागमादिमानात् तत्त्वसिद्धिः किं न स्यात्? आगमादेः स्वरूपासत्यत्वेऽपि च प्रतिबिम्बवन्न मानत्वहानिः। नहि सत्यं प्रमाणं असत्यमप्रमाणमिति प्रमाणाप्रमाणलक्षणम्। किन्तु ज्ञाति-[अज्ञाताबाध्य] विषयं प्रमाणमितरद्बाध्यविषयम्। ननु स्वप्रकाशमज्ञातमिति व्याहतम्; न, अविरोधात्। प्रमाणोत्थान्तः करणवृत्तिज्ञाननिवर्त्यं हि तद्विरोध्यज्ञानम्। नात्मस्वरूपप्रकाशविरोधि, तद्भास्यत्वात्। यद्धि यदवभास्यं तन्न तन्निवर्त्यमिति प्रसिद्धा लौकिकी व्याप्तिः। ननु आत्मा स्वप्रकाश इत्यत्र प्रमाणाभावः; अत्र आगमादिमानसद्भावात्[2]; तथाहि—"अत्रायं पुरुषः स्वयं ज्योतिः" "प्रज्ञानं ब्रह्म" "सत्यं ज्ञानमनन्तं ब्रह्म" इति श्रूयते। तथा आत्मा आत्मव्यवहारहेतुप्रकाशः आत्मत्वात्कुम्भवदिति व्यतिरेकिप्रयोगो द्रष्टव्यः। नन्वव्यवहार्यात्मवादिनोऽप्रसिद्धविशेषणः पक्षः।

---

1. ततश्च स्वस्य गर्दभजन्यत्वेन गर्दभत्वं सिद्ध्येदिति भावः।

2.A. सम्भवात्

लोके लाक्षणिकोऽप्यात्मनि न शब्दव्यवहारोऽस्ति ; प्रयोजनाभावात् । वैदिकस्तु लाक्षणिकः शब्दो न प्रकाशजन्यः ; न, सुखमहमस्वाप्समिति लाक्षणिकशब्दव्यवहारश्रवणात् । नाप्यत्रासिद्धविरुद्धानध्यवसितकालात्ययापदिष्टतादोषप्रसङ्गसंभवः । पक्षवृत्तेः विपक्षाद्व्यावृत्तेरसाधकताराहित्यस्याबाधितविषयत्वस्य च स्पष्टत्वात् । नन्वात्मत्वं तव नाऽत्मातिरिक्तजातिरस्त्यद्वैतविरोधात् । न च तदात्मैव, अपक्षधर्मतापत्तेः; न, तस्यौपाधिकत्वेनोपपत्तेः, औपाधिकस्यापि हि व्यावहारिकस्य साधनता प्रतिबिम्बस्येवाविरुद्धा । औपाधिकत्वं चास्योक्तं तत्र भवद्भिः बृहद्वार्तिके—

" यदाप्नोति यदादत्ते यच्चात्ति विषयानिह ।
येनास्य सन्ततो भावः तस्मादात्मेति कथ्यते " ॥ (बृ. वा. ७३७.)

इत्यादि । अतात्विकमात्मत्वं देहादौ विपक्षेऽप्यस्तीति विरुद्धतेति चेन्न । तत्रोपाधेरभावे औपाधिकस्याप्यभावात् । न हि देहादिना ग्रामादि व्याप्यते । चैत्रो ग्राममाप्नोतीति शब्दप्रयोगस्त्वौपचारिकः, मुख्यार्थासंभवात् । ननूपाधिसंबन्धोऽसङ्गाद्वितीयात्मन्यपि ते संभवतीत्यात्मत्वं तत्राविद्याध्यस्तम् ; तथा देहादावपि त्वयेष्यते, तत्रात्मनोऽप्यध्यासाश्रयणात् ; न, आत्मनः स्वरूपाध्यासास्वीकारात् । तथा हि—पुरोवर्तिनि रूप्यमध्यस्तम् , न रूप्ये पुरोवर्तिस्वरूपम् । एवमात्मन्यनात्मजातमध्यस्तं, न त्वात्माऽनात्मनि । कथं तर्हि अन्योन्याध्यासोक्तिर्भाष्ये ; न, आत्मतादात्म्यसंबन्धमात्राध्यासान्नात्मस्वरूपाध्यासात् , अन्यथा निरधिष्ठानभ्रमापत्तेः । तस्मान्न विरुद्धतापि । नचाहमनुभवामीत्यात्मानुभवभेदाध्यक्षबाधः; अहंकारद्रष्टुरेव प्रकाशात्मत्वसाधनात् । तद्भेददृष्टेश्चासंप्रतिपत्तेः, असंभवाच्च । नह्यविषयस्य भेददृष्टिः संभवति, अतिप्रसङ्गात् । अतो नानुमानेनापि बाधः, तद्बलवत्त्वानिरूपणाच्च न तेन बाधः । आगमस्त्वनुगुण एव । [1]प्रतिकूलागमश्चानुकूलागमेन तात्पर्यानुगृहीतेन निवार्यते । अतो न बाधगन्धोऽपि । प्रतिप्रयोगासम्भवाच्च न प्रतिरोधोऽपि । आत्माभिज्ञा स्वविषयाद्भिद्यते अभिज्ञात्वात् कुम्भाभिज्ञावदिति प्रतिप्रयोग इति चेत् ; न, साध्यविकलत्वात् दृष्टान्तस्य, आत्मनो हि तदभिज्ञाभेदः साध्यः स्वविषयभेदशब्दनिर्देशात् । न च कुंभाभिज्ञा आत्मनो भिन्नेष्यते । "तस्य भासा सर्वमिदं विभाति" इति श्रुतेः । न च ते विशिष्टं साध्यं सिद्ध्यतीत्युक्तम् । एवं न हेतुदोषसंभवः । दृष्टान्तदोषविरहस्त्वतिरोहित एव । ननु विपक्षे किं बाधकम् । आत्मनोऽपरोक्षत्वविरहप्रसङ्गस्तवेति ब्रूमः । स्वाश्रयसंविद्विषयतया अपरोक्षत्वे हि वृत्तिविरोधः स्पष्टः । [2]संविदाश्रयतया अपरोक्षत्वे हि वृत्तिविरोधः स्पष्टः । संविदाश्रयतया अपरोक्षत्वं तु प्रक्रियामात्रम् ; मानहीनं हि तत् । अहमनुभवामीत्यध्यक्षसिद्धोऽयमर्थ इति चेत् ; सत्यम् , न तु तवेत्थं संभवति । तथा हि—चिन्मयमात्मा संवित्कर्मतया, किंवा संविदाश्रयतया, अथवा स्वप्रकाशतयाऽध्यक्षसिद्धः । नाद्यः । आत्मसंवेदनयोरपि संवित्कर्मतयाऽध्यक्षताप्रसङ्गात् , तद्विशिष्टस्य संवित्कर्मताभ्युपगमात् । नापि द्वितीयतृतीयौ । प्रकृतस्यार्थस्यात्मसंविद्भ्यामितरत्वात् अतोऽस्वप्रकाशत्वे तवात्मनो नापरोक्षत्वसंभवः । इयमपरोक्षताऽन्यथा अनुपपद्यमाना शक्नोत्यात्मनः स्वप्रकाशतां गमयितुमित्यर्थापत्तिरप्यत्र मानम् । तस्मादागमादिप्रमाणत्रयसिद्धमात्मनः स्वप्रकाशत्वम् । अद्वितीयत्वादात्मनः प्रकाशैकरसता । अद्वितीयत्वे त्वागमः प्रागेव दर्शितः । प्रयोगोऽपि तीर्थिकान् प्रति तावदुच्यते ।

---

1. "मनसैवेदमाप्तव्यम्" "दृश्यते त्वग्र्यया बुद्ध्या" इत्यादिः तस्य मनसः वाक्यसहयत्वे तात्पर्यम् ॥

2. संविद्विषयतया

विवादपदं द्वैतं एकस्यामेव दृश्यध्यस्तं, दृश्यत्वात् यथैकस्मिन् ज्ञाने बौद्धपरिकल्पितज्ञानभेदाः। संविद्द्वये एकसंविदध्यासः एकस्यामपि संभवतीत्यत उक्तमेकस्यामेवेति। असिद्धयादिविरहे तावदविवाद एव। बौद्धकल्पितज्ञानभेदास्तेषु साध्यसाधनवत्ता चास्माकमसिद्धेति चेत्; न, तदुपालंभप्रसङ्गात्; अप्रामाणिकस्यापि च दृष्टान्तधर्मितादि प्रतिबिम्बादौ दृश्यते। यद्यध्यस्तता दृश्यत्वं च धर्म्यन्तर्भूतं, तदा विरोधान्न तस्यात्मधर्मतेति भागे बाधो, ऽसिद्धिश्च; धर्म्यनन्तर्भावे चाध्यस्तताया अध्यस्तताऽभावात् दृश्यत्वभावाच्च व्यभिचारः स्पष्ट इति चेन्न; औपाधिकत्वेन स्ववृत्तिविरोधासंभवात् औपाधिको हि धर्म उपाधिसंबन्धाधीनवृत्तिरतोऽध्यस्ततादृश्यत्वयोरप्यध्यासस्य दृक्संबन्धस्य चोपाधेः सद्भावादौपाधिके अध्यस्ततादृश्यत्वेऽविरुद्धे। तर्ह्युपाध्यावुपाधेरभावादुक्तदोषप्रसङ्गस्तदवस्थः; न, अध्यासादेरुपाधेः स्वपरनिर्वाहकत्वात् अनुपपन्नापि हि स्वनिर्वाहकता काल्पनिकस्यानुपपत्तिस्वस्त्ययनस्य दृश्यमानस्येष्यते परेणेव समवायादेः। शुक्त्यादावध्यस्तरूप्यादिनाऽनैकान्ततेति चेन्न। शुक्त्यादेः कल्पितस्याधिष्ठानतानभ्युपगमात्[1]। अन्यतरासिद्धिवदन्यतरव्यभिचारोऽपि दूषणमिति पक्षेऽपि[2] न दोषः। विवादपदमिति धर्मिनिर्देशेन शुक्तिरूप्यादेरपि पक्षे निक्षेपात्।

तथापि विपक्षे किं बाधकमिति चेत्। द्वैतदृश्यताभङ्गप्रसङ्ग इति ब्रमः। न हि जडं दृक्संबन्धं विना दृक्कर्मतां गच्छेत् अतिप्रसङ्गात् नापि दृक्कर्मतामन्तरेण जडसिद्धिरजडत्वप्राप्तेः, न च दृश्यध्यासादृते जडस्य दृक्सम्बन्धः संभवी। न तावत्संयोगः संभवेत्, दृशोऽद्रव्यत्वात्। कुंभादेस्तत्समवायोऽपि नेष्यते। तत्तादात्म्यं तु तीर्थिकस्यातिद्वेष्यम्। ननु दृशि कुंभाद्यध्यासोऽपि तीर्थिकस्यासंमत एव; सत्यम्, अतएव तद्विषयानुमानमुपन्यस्तम्। तस्मादध्यासंविना न द्वैतसिद्धिः संभवेत्। अनया चान्यथानुपपत्त्याऽर्थापत्तिवाद्यद्वैतमनिच्छन्नप्यवगच्छेत्। न चात्र बाधः प्रतिरोधो वा संभवी; प्रतीपमानासंभवात्। पटकुम्भस्तंभादिभेदगोचराध्यक्षबाध इति चेन्न; मरुमरीचितरङ्गिणीतरङ्गभेदाध्यक्षवदविरोधात्। अबाधिततया च विशेषो निरस्तः[3] पुरस्तात्।

स्यान्मतम्। दृश्यं द्रष्टृभेदवत्; दृश्यत्वात् द्रष्ट्रन्तरवदित्यनुमानविरोधः स्पष्ट इति। नच द्रष्ट्रन्तरधर्माद्यभावात्[4] नेदमनुमानम्। द्रष्ट्रन्तराद्यभावे तव शमाद्युपन्यासवैयर्थ्यप्रसङ्गात्[5]। नायं विरोधः। साध्यानिरूपणात्। तथाहि-भेदस्तात्विकः साध्यः, किंवाऽतात्विकः, आहो साधारणः? आद्येऽप्रसिद्धविशेषणः पक्षः। दृष्टान्तश्च साध्यविकलः। द्वितीयतृतीयस्तु सिद्धसाधनता व्यावहारिकभेदाश्रयणात्। बलवत्त्वासंभवाच्च न बाधसंभवः। एवं प्रयोगान्तरेऽपि साध्याद्यसंभवात् न प्रतिरोधोऽपि। तस्मादात्मनोऽद्वितीयतापि प्रमाणत्रयवतीति सिद्धम्। एवमुक्तनीत्या समस्तानात्मवस्तु मिथ्येत्यपि प्रमाणसिद्धम्। बौद्धान्प्रति तु विवादपदशब्देन संविद्भेदोत्पत्तिनाशादयो विप्रतिपन्ना धर्मित्वेन-

---

1. शुक्त्याद्यवच्छिन्नचैतन्यस्यैवाधिष्ठानत्वादिति भावः
2. परमते शुक्त्यादेः अनध्यस्तत्वात् तत्र दृश्यत्वसत्वेन व्यभिचारः
3. भेदस्यापि बाध्यत्वमुक्तमिति भावः
4. धर्माः तद्दृश्यत्वभेदादयः
5. न खलु स्वस्यैव स्वदर्शनं कर्मकर्तृभावविरोधात्
प्राप्तत्वेपि अविद्याव्यवधानेनाप्राप्तत्वात् शमविधानोपपत्तिरित्याह-नायमिति

वाच्याः । तत्राप्येकस्यामेवेति विशेषणं भागे सिद्धसाधनतापरिहारार्थम् । सन्तानोह्यनेकसंविस्त्वभ्यस्तोऽनेकस्यामभ्यस्तो भवति, नत्वेकस्यामेव ; दृष्टान्तश्चैको नीलाद्याकारः । अन्यत्तुल्यम् । तस्माद्द्वितीयमेव संविद्रूपं ब्रह्मेति सिद्धम् ॥

ननु ब्रह्मणोऽत्यन्ताद्वितीयत्वे तत्प्राप्तिर्मोक्षोऽपुमर्थः स्यात्, तत्र सुखसाक्षात्कारासंभवात्, तस्मादानन्दगुणकं ब्रह्माभ्युपेयम् ; न, सुखसंविदेकरसत्रह्मणः सुखसाक्षात्कारत्वात् । आनन्दरूपं हि ब्रह्म । "आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते । आनन्देन जातानि जीवन्ति । आनन्दं प्रयन्त्यभिसंविशन्ति" "तद्ब्रह्म" । "आनन्दो ब्रह्मेति व्यजानात्" (तै ३.) "विज्ञानमानन्दं ब्रह्म (बृ. ३.९.)" इति चागमादवगम्यते । तच्च ब्रह्मात्मस्वरूपमागमसिद्ध[1]मित्युक्तम् । आत्मन आनन्दरूपता अनुमानादपि गम्यते । तथा हि—आत्मा आनन्दो, निरुपाधिप्रेमास्पदत्वात् दुःखवदिति व्यतिरेकिप्रयोगः । हेतोः पक्षवृत्तौ तावदविवाद एव । आत्मा ह्यात्मनेऽव[2] प्रेम्णो गोचरो नान्यार्थतया । अन्यद्धि क्षेत्राद्यात्मार्थतया प्रियं प्रसिद्धम् "आत्मनस्तु कामाय सर्वं प्रियं भवति" इति च श्रूयते । ननु सुखमात्मार्थतया प्रियं न सुखमित्येव । तेनायं सपक्षाद्व्यावृत्तोऽसाधारणो हेतुः ; न, सुखस्य सपक्षत्वाभावात् । सुखात्मता हि आत्मनः साध्या । अतः सुखस्य पक्षनिक्षिप्तत्वात् सपक्षत्वाभावात् नायं हेतुरसाधारणः । मुख्यसुखस्य च नात्मार्थता, अकिञ्चित्करत्वात् । सुखापरोक्षं तु न सुखजन्यम् । किं तु नित्यम्, अन्यथा सुषुप्तौ न स्यात् । अमुख्यं हि सुखं मनोवृत्तिरूपम्, स्वरूपसुखाभिव्यञ्जकत्वादात्मार्थम् ।

ननु दुःखनिवृत्तिरपि स्वत एव प्रीतिविषयोऽतोऽयं विरुद्धो हेतुः ; न, सुखाभिव्यञ्जकतया दुःखनिवृत्तेः प्रीतिविषयत्वात् । अतितीव्रज्वरभारादिजन्मदुःखनिवृत्तौ हि सुखं साक्षादबाधितमवभासते । स्यान्मतम् । न तत्र दुःखनिवृत्तेः अन्यत् सुखमस्ति तद्धेत्वभावात्; नच नित्यं सुखमस्त्यनुभवप्रसिद्धिविरोधात् । अतो विषयसद्भावेऽपि न भावरूपं सुखं जायते । किन्तु विषयाप्राप्तौ रागजनितदुःखाभावरूपम् । अन्यथा क्वचिद्भावरूपं क्वचिदभावरूपं सुखमित्यनेकरूपता तस्यानुभवविरुद्धा कल्प्येत । यदपि मानं सुखं दुःखाभावो न भवति, दुःखानिरूप्यत्वात् कुम्भवदिति । तदसत् । दुःखेन व्यभिचारात् । दुःखं हि दुःखानिरूप्यम् । नच दुःखं दुःखाभावेतरेतराभाववत् दुःखस्य[3]दुःखविशेषणविशेष्य[4]त्वापत्तेस्तस्मात् दुःखनिवृत्तिः स्वरूपेणैव प्रीतिविषयः ; उच्यते, न तावद्दुःखनिवृत्तिः सुखमित्यत्र प्रमाणमस्ति । भावप्रत्ययविरोधश्च स्पष्टः । भावत्वं तु सुखस्य ब्रह्मतयाऽऽगमात्सिद्धम् । प्रयोगाच्च-सुखं भावोऽपरोक्षत्वात्कुम्भवदिति । नच कुम्भाभावेन व्यभिचारस्तस्य अनुपालब्धिबोध्यस्य प्रातर्गजाभावस्येवापरोक्षत्वाभावात् । ज्ञानाभावेन साक्ष्यपरोक्षेण व्यभिचार, इति चेन्न । तस्य माययाऽऽत्मन्यध्यस्तस्यासद्विलक्षणत्वात् । तस्मात् सुखं न दुःखाभावः । कथं तर्हि ज्वरभारादिनिवृत्तौ सुखोपलब्धिः ? दुःखनिवृत्त्युपलक्षितान्तःकरणस्य विषयेन्द्रियसंपर्कजन्यवृत्तिवदात्मस्वरूपसुखाभिव्यञ्जकत्वादिति ब्रूमः । तस्मात् न विरुद्धतापि । अत एव निर्विशेषात्मस्वरूपसुखस्य व्यञ्जकान्तः करणवृत्तिसंभेदात् सुखमात्मार्थं, जायते, नश्यति, भिन्नमल्पं महद्वेद्यं चेत्यादि संविन्न-

---

1. c reads गम्यमि
2. a आत्मन्येव
3. c. reads सुखस्य स्व
4. c. शेषणत्वानुपपत्तेः

विरुद्ध्यते। "एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति" इति मात्रात्वश्रुतिः "ते ये शतं मानुषा आनन्दाः" इत्याद्युत्तरोत्तरशतगुणोत्कर्षश्चानन्दस्य श्रूयमाण उपपन्नो भवत्येव। एतेन बाधविरोधौ व्याख्यातौ। औपाधिकभेदविषयकतयाऽविरुद्धत्वात्। दृष्टान्तदोषविरहस्त्वतिरोहित एव। विपक्षे किं बाधकम्? सुखस्यात्मगुणत्वे सुषुप्तौ सुखतज्ज्ञानयोरभावात् सुषुप्त्यनन्तरं सुखमहस्वाप्समिति परामर्शो न स्यादिति ब्रूमः। न ह्यननुभूतं परामृश्यते। ननु स्वप्नान्तेऽनुभूतं सुखं सुषुप्तिसामीप्यात् तत्कालीनविषयतयाऽयं परामर्शो मिथ्या, यथा दुःखमस्वाप्समिति। न, सुषुप्तेरभानात् तवेत्थं भ्रमस्याप्यसम्भवात्। नचानुमानात्सुषुप्तिसिद्धेरुक्तभ्रमसंभवः। [1]सुषुप्तितत्कालतत्कालीनधर्म्यादेरसिद्धेरनुमानासंभवात्। तर्हि तव दुःखपरामर्शवत् सुखपरामर्शस्यापि भ्रमत्वोपपत्तेः दुःखवत् सुखस्याप्यनात्मत्वेनानुपपत्तिः; न, अस्य भ्रमत्वासंभवात्। सुषुप्तौ हि दुःखाभावात्तत्कालीनदुःखविषयस्य परामर्शस्य भ्रमत्वमुपपद्यते। सुखस्य तु तत्राभावो न कल्पयितुमपि शक्यः। "एषोऽस्य परम आनन्द" इत्यागमविरोधात्; एषोऽस्येति च भेदनिर्देशः समस्तकामादिदुःखोपप्लवाभावावस्थाविद्याभिव्यक्तानन्दभेदविषयो न विरुद्ध्यते। अतोऽयं परामर्शः सौषुप्तानन्दविषयो यथार्थप्रत्ययो न तु भ्रमः, स आत्मनोऽनानन्दत्वे न स्यादिति विपक्षे बाधः सिद्धः। इयमेवानुपपत्तिरुक्तार्थं साधयन्त्यर्थापत्तिः तद्वादिनाम्। तस्मादुक्तप्रमाणैः आत्मा आनन्द इति सिद्धम्।

ननु आत्मनोऽद्वैतता स्वप्रकाशत्वमानन्तरूपता च न तावत् जातिः, अद्वितीयताविरोधात्। नाप्यौपाधिको-धर्मः, तस्यावस्तुतया स्फटिकलौहित्यवदप्रामाणिकत्वप्रसङ्गात्। [2]एतेन द्वैताभावः प्रकाशादिभेदाभावो[3] व्याख्यातः। आत्ममात्रत्वे तु संज्ञामात्रे विवादः स्यात्, भेदादिमत्त्वाविरोधश्च; तस्मादुक्तागमोऽन्यपरोऽनुमानादि तु साध्यासंभवग्रस्तम्; उच्यते। अद्वितीयता तावत् द्वैताभावोपलक्षितमात्मस्वरूपम्। स्वप्रकाशतापि प्रकाशभेदाभावोपलक्षितं स्वरूपम्। एवमानन्दरूपतापि व्याख्येया। नच सिद्धसाधनता; अस्मदुक्तोपलक्षणावच्छेदस्यात्मनः परेणाऽनभ्युपगमात्। उपलक्षितमपि क्वचिदनुमेयम्। यथा स्वप्रच्युत्युपलक्षिता सत्ता अनित्यत्वम्। द्वैताभावोऽप्रसिद्धोऽतः तदुपलक्षितमप्यप्रसिद्धं नानुमेयमिति चेन्न। अत्र साध्यनिर्देशस्यानेवंरूपत्वात्।

ननु आगमादि संसृष्टे विषये प्रमाणम्। पदानि हि संभूय संसृष्टे पदार्थे पदार्थसंसर्गे वा मानम्। प्रतिज्ञाद्यवयवा अपि संभूय विशिष्टं बोधयन्तोऽनुमानम्। अतो नाद्वितीयं चिदेकरसमागमस्यानुमानस्य वा गोचरः। लक्षणया अखण्डार्थत्वं सत्यज्ञानादिपदानां संभवतीति चेन्न। मानविषयस्य पदान्तरवाच्यस्य लक्ष्यत्वनियमात्। अन्यथा लक्ष्यनिर्देशो न स्यात् इदं लक्ष्यमिति। लक्षणान्तराल्लक्ष्यनिर्देशे चानवस्थाप्रसङ्गः। किञ्चाजहल्लक्षणायां सत्यादिविशिष्टं ब्रह्म लक्ष्यं स्यात्। जहल्लक्षणायां त्वसत्याज्ञानादि लक्ष्यं भवेत्। भागत्यागलक्षणोत्प्रेक्षाऽप्यत्रासंभविनी, सत्यज्ञानादेः निर्भागत्वात्। एवमनुमानस्यापि मानसिद्धं धर्म्यादिसंसृष्टमेव विषयोऽवश्यमभ्युपेयोऽन्यथा असिद्ध्यादिदोषप्रसङ्गात्। तस्मात् अद्वयं[4] वस्तु मानसिद्धमिति वेदान्तिनां किंवदन्तीमात्रम्।

---

1. c. सुषुप्तेऽसिद्धे
2. अप्रामाणिकत्वेन
3. c भावेन 4. c अद्वितीयं

उच्यते । नायं कश्चिदपि दोषोऽसत्पक्षे संभवति । तथा हि-न तावत्पदान्तरवाच्यस्यैव लक्ष्यता, इक्ष्वादिमाधुर्यविशेषस्य साक्षाद्वक्तुमशक्यस्यापि लक्ष्यत्वात् । न तत्र लक्षणापीति चेन्न । तत्रेत्यनुवादाभावापत्तेः । नच तत्र लक्ष्यनिर्देशान्तरापेक्षा । तदपरोक्षानुभवादेव नैराकांक्ष्यात् । एवं न लक्ष्यस्य मानविषयतानियमोऽपि । सुषुप्तावलौकिकानन्दस्य लक्षणया सुखमस्वाप्समिति व्यपदेशदर्शनात् । नहि तत्र मुख्या शब्दवृत्तिः संभवेत् । तस्य मानागोचरत्वात् । ब्रह्मणि लक्षणान्तराऽसंभवेऽपि च संभवत्येव जहदजहल्लक्षणा । सत्यादिपदार्थस्य सभागत्वात् । बाधानर्हं हि सत्यं प्रसिद्धम् । अतः सत्यादिपदानां भागत्यागलक्षणोपपद्यते । लोकेऽप्यनेकपदप्रयोगो जहदजहल्लक्षणयाऽखण्डविषयो दृश्यते । तथा हि—प्रकृष्टप्रकाशश्चन्द्रः इति प्रयोगे प्रकृष्टादिपदानां चन्द्रमात्रार्थता आश्रीयते । नह्यत्र प्रकर्षादिविशिष्टता बोध्या[1] । चन्द्रप्रातिपदिकार्थमात्रप्रश्नोत्तरत्वात्, अन्यथाऽप्रस्तुताभिधानप्रसङ्गात् । एवं यथोक्तात्मन्यनुमानमप्युपपद्यते । स्वयंप्रकाशतया हि धर्मिणि सिद्धे व्यवहारसिद्धव्याप्तिपक्षधर्मतादिबलात् साध्यविशिष्टाकारा बुद्धिवृत्तिरुत्पद्यते । तस्यां चाभिव्यक्तो दृगात्मैव स्वात्मन्यध्यस्तस्य साध्यविशिष्टरूपस्य स्फुरणं भवत्प्रमाणफलमिति गीयते । प्रपञ्चितं चैतत्सर्वमिष्टसिद्धिविवरणे[2] च रत्नदीपावल्यां च । तस्मान्निरवद्यमद्वैतादिमानम् ॥

निजमौपाधिकं तत्त्वं दृशस्तावन्निरूपितम् ।
अथ मायात्मकं दृश्यं बहुभेदं निरूप्यते ॥

दृग्दृश्यं चेति पदार्थद्वयं तावत् लोकवादिप्रसिद्धम् । तत्र दृक्तत्वं संक्षेपतो दर्शितम् । अनन्तरमनन्तभेदं दृश्यं निरूप्यते । दृशोऽन्यज्जडम् । दृक्सं[3]बन्धं वा वस्तु दृश्यम् । नन्वभेद एव दृग्दृश्ययोः, सहैवोपलब्धेः, अन्यथा दृक्संबन्धाभावान्नीलादेः दृश्यता न स्यात्; तस्मात् दृक्तादात्म्यादेव सर्वस्य दृश्यता; न, अभावस्यापि दृश्यत्वात्, तस्यापि ज्ञानत्वेऽभावत्वहानिः । ज्ञानं वा विनाशि स्यात् । अतो नाभावो ज्ञानात्मा । एतेन दृग्दृश्ययोः सहोपलंभनियमात् अभेदानुमानमपास्तम् । प्रतिज्ञाहेत्वोश्चात्र विरोधात् बाधासिद्ध्योरन्यतरापत्तिः । अतो नाभेदो दृग्दृश्ययोः । तस्मात् दृक्संबन्धादेव दृश्यता ; दृक्संबन्धश्च मायाकृतोऽध्यास आस्थेयो नान्यथा, दृशोऽसङ्गत्वात् । प्रकारान्तरं च निरस्तं पुरस्तात् । गतं तर्हि मायाया दृक्संबन्धेन दृश्यत्वेन च; मायान्तराभावात् तत्कृताध्यासासंभवात् ; न, मायाध्यासयोः स्वपरनिर्वाहकत्वात् । स्वपरनिर्वाहकत्वं चोक्तम् मायायास्तत्त्वविद्भिः ।

नास्याविद्येत्यविद्यायामेवासित्वा प्रकल्प्यते ।
ब्रह्मदृष्ट्या त्वविद्येति न कथंचन युज्यते ॥

इति । एवमहंकाराद्यध्यासोऽपि स्वपरनिर्वाहकः परसिद्धसमवायादिवदिष्यते । तस्मात् दृक्संबन्धात् जगत् दृश्यमिति सिद्धम् ।

---

1. c बाधः
2. c म्यगिष्ट
3. A बन्धोपाधौ

तच्च द्विविधं कारणं कार्यं च। तत्र कारणं सत्वादिनाऽनिर्वाच्या माया। "मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्" इति श्रुतेः। सत्वाद्यनिर्वाच्यताऽपि तस्याः श्रुतिसिद्धा। तथा हि श्रुतिः—"नासदासीन्नोसदासीत्" इत्युपक्रम्य "तम आसी"दिति। "आसीदिदं तमोभूतमप्रज्ञातमलक्षणम्" इति स्मृतिः। ननु "यतो वा इमानि भूतानि जायन्ते" इत्युपक्रम्य "तद्ब्रह्म", "तस्माद्वा एतस्मादात्मन आकाशः संभूतः" "यत्तदद्रेश्य" मित्युपक्रम्य "तद्भूतयोनिं परिपश्यन्ति धीराः", सर्वं च भूतभौतिकं प्रज्ञानत्वेन प्रक्रम्य "सर्वं तत् प्रज्ञानेत्रं प्रज्ञाने प्रतिष्ठितम् प्रज्ञानेत्रो लोकः प्रज्ञा प्रतिष्ठा, प्रज्ञानं ब्रह्म" त्यादौ ब्रह्मोपादानता श्रूयते। तथाचौपनिषदं सूत्रम्-ब्रह्मजिज्ञासां प्रक्रम्य "जन्माद्यस्य यतः" इति, "प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्" इति च। तस्मात् वियदादेः विश्वस्य ब्रह्मोपादानं न मायेति। उच्यते। ब्रह्मोपादानमितीप्यत एव। न मायोपादानमिति तु न क्षम्यते। उपादानता हि स्वात्मनि कार्य[1]जनिहेतुत्वम्। तच्चोभयत्रापि मानसिद्धमुपपन्नं च। तथाहि—विश्वस्य मायापरिणामत्वात् मायाश्रयं जन्म। तथा च ब्रह्मविवर्तत्वात् विश्वस्य ब्रह्माधिष्ठानता श्रुता, उपपन्ना च।

यत्तु ब्रह्मपरिणामत्वात् विश्वस्य ब्रह्मैवाश्रयो न मायेति मतम्; तदसत्, ब्रह्मणः परिणामासंभवात्; ब्रह्म हि कूटस्थं निष्क्रियादिश्रुतिसिद्धम्, "कूटस्थमचलं ध्रुवम्" इति स्मृतिसिद्धम् च। परिणामित्वे च क्षीरादिवदनित्यत्वं स्यात्, सुवर्णादेरपि परिणामो न निरूप्यमाणः संभवेत्। स हि न तथाभूतस्य, तथाभूतत्वविरोधात्। अन्यथाभूतस्य चान्यथाभावोऽनवस्थाग्रस्तः। अतस्तत्प्रतीतिरेव काण्र्यप्रतीतिवदास्थेया[2]। निरवयवत्वादपि ब्रह्मणो न परिणामः संभवी। निरवयवता चास्य 'निष्कलमि'ति श्रुतिसिद्धा। सावयवत्वे चानित्यत्वप्रसङ्गः। तस्मात् विश्वस्याधिष्ठानतयैव ब्रह्म प्रकृतिः गन्धर्वनगरस्येवाऽऽकाशम्। अतो मायाप्रकृतित्वं श्रुतौ नापलपनीयम्। अन्यथा च कूटस्थासङ्गाद्वितीयस्य ब्रह्मणो विश्वप्रकृतिता न स्यात्। सा चाज्ञानाविद्यादिशब्दैरभाववाचकैरुच्यमानापि नासती। तथा मायादिशब्दवाच्यापि न सती। "नासदासीन्नो सदासीत्" इति श्रुतिविरोधात्। तत्त्वज्ञाननिवर्त्या हि सा तथोच्यते। तथा च शास्त्रम्, "तस्याभिध्यानात् योजनात्तत्त्वभावात् भूयश्चान्ते विश्वमायानिवृत्ति"रिति। प्रयोगश्चासद्वैलक्षण्ये तावत्-विमतं नाभावोऽपरोक्षत्वात् कुंभवदिति। विपक्षे चाज्ञानापरोक्षता न स्यात्। ननु चक्षुषा मनसा वा साक्षादभावो निश्चीयते। 'नात्र कुंभो' 'न मे सुख'मित्यतो व्यभिचारः स्पष्टः; न, इयमभावसंविन्नापरोक्षा, अनुपलब्धिजन्यत्वात् अनुपलब्धिलिङ्गजन्याभावसंविद्वदिति प्रयोगविरोधात्। उक्तं चैतत्पुरस्तात्। तथाप्यसिद्धेः कः प्रतीकारः; उच्यते, सुषुप्तौ तावदज्ञानमवभासते, अन्यथा स्वापोत्थितस्याज्ञानपरामर्शो न स्यात्। न ह्यननुभूतं परामृश्यते; परामृश्यते चाज्ञानं 'न किञ्चिदवेदिषम्, मूढ एवाहमास'मिति। न च तत्र परोक्षज्ञाने हेतुरस्ति, सुषुप्तिविरोधात्। प्रयोगोऽपि-विमतमपरोक्षं परोक्षज्ञानसामग्रीरहितावसेयत्वात् संप्रतिपन्नवदिति।

ननु न सुषुप्तावपरोक्षज्ञानहेतुरप्यस्ति; सत्यम्, किन्तु नित्यानुभवात् तदवस्थस्यापरोक्षता नानुपपन्ना। तस्मादज्ञानं नासत्। एवं [3]तन्न सत् तत्वज्ञानप्रयुक्तनिवृत्तित्वात्, रज्जुसर्पसंसर्गवदिति प्रयोगादवगम्यते। उक्तहेतु-

1. C. जाति  2. आकाशकाण्र्यप्रतीतिवदित्यर्थः

3. C. reads विमतं न

दृष्टान्ताभ्यां सदसद्वैलक्षण्यमप्यत्र शक्यं साधयितुम् । न तावदप्रसिद्धविशेषणः पक्षः । भ्रमसिद्धसंसर्गे साध्यप्रसिद्धेः । अत्यन्तासत्त्वे हि तस्य भ्रमविषयत्वानुपपत्तिः । न च ज्ञानप्रागभावेन व्यभिचारः ; तस्य हि कार्यनिष्पत्तिप्रयुक्ता तत्साम-ग्रीप्रयुक्ता वा निवृत्तिः कुंभादिप्रागभावस्येव । न च ज्ञानं स्वनिवर्त्यस्य प्रागभावस्य विशेषणम् , ज्ञानस्य स्वनिवर्त्यतापत्तेः । उपलक्षणपक्षे त्वभावमात्रस्य भावमात्रेण निवर्त्यता भावाभावयोर्विरोधात् । न च ज्ञानस्यापि तन्निवर्तकत्वे मानमस्ति ।

ननु ज्ञानप्रागभाव एवाज्ञानं लोकवादिप्रसिद्धम् । नचान्यदज्ञानं प्रसिद्धमस्ति । अतः प्रसिद्धिविरोधो धर्म्याद्य-सिद्धिर्वेति ; उच्यते, सुषुप्तिमूर्छादौ तावदज्ञानं प्रसिद्धम् । न च तदा ज्ञानाभावोऽवगन्तुं शक्यो धर्म्याद्यसिद्धेः ; तस्मान्न ज्ञानप्रागभावोऽज्ञानम् । प्रयोगस्तु, ज्ञानप्रागभावो नाज्ञानं अभावत्वात् कुंभाभाववदिति । ननु ज्ञानप्रागभावस्याज्ञानत्व-निषेधे त्रिधापि व्याघातः । तथा हि-यदि नाज्ञानमिति ज्ञानाभावता निषिद्ध्यते , यदि वा ज्ञानादन्यत्वं वा , ज्ञानविरो-धिता वा, त्रिधापि निषेधो व्याहन्यते ; ज्ञानप्रागभावस्य ज्ञानाभावादिरूपेण त्वयाऽप्याश्रयणात् । सत्यम् , नायं निषेधो ज्ञानस्य । किन्तु सुषुप्त्यादिप्रसिद्धादज्ञानात् ज्ञानप्रागभावस्य पृथक्त्वाभिधानं धर्मप्रागभावोऽधर्मो न भवतीति यथा । तस्मादज्ञानं सदसद्विलक्षणं सिद्धम् । अतस्तद्भावाभावप्रमाणागम्यस्वरूपं प्रमाणनिवर्त्यमनिर्वाच्यम् । नहि सत् प्रमाणनिवर्त्यम् । असच्च न भ्रान्तेर्बाधस्य वा गोचरः । अतः सदसत्त्वाभ्यां निरुक्त्यनर्हम् । स्वरूपसिद्धिस्तु साक्षिणेत्युक्तम् ।

आगमादिमानादज्ञानस्य साक्षिसिद्धस्य जगत्प्रकृतितादीत्थंभाव एव सिद्ध्यति न स्वरूपम्, तस्य माननिवर्त्यत्वात् । निवर्तकादन्यतो मानात्तत्सिद्धिः स्यादिति चेन्न । निवर्तकजातीयादपि सिद्धेरदर्शनात् । प्रमाणनिवर्त्यं हि भ्रान्तिसिद्धं पर-प्रक्रियासिद्धं वा, न प्रमाणगम्यमित्यखण्डिता व्याप्तिः । तस्मात्प्रमाणनिवर्त्यतया अनिवर्चनीयताऽज्ञानस्येति सिद्धम् । कार्यंच बहु-भेदभिन्नम् । तत्र कालस्तावत् 'स संवत्सरोऽभवदि'त्युत्पत्तिमान् श्रूयते (बृ. १. २.) । वियदादेः भूतपञ्चकस्याप्युत्पत्तिः 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः' (तै २. १.) इत्याद्यागमसिद्धा । दिशश्चाकाशस्यौपाधिका भेदा न वस्त्वन्तराणि [1]मानाभावात् । मनोऽपि भूतविकारः "अन्नमयं हि सोम्य मनः" (छां-६-) इति श्रुतेः । प्रयोगस्तु, विमतं कार्यं भिन्नत्वात् कुम्भवदिति । एवं परमाणूनामपि कार्यतानुमेयता । न चात्मना व्यभिचारः ; तस्य हि भिन्नत्वे पक्षेऽन्तर्भावात् । अभिन्नत्वे तदसिद्धेः[2], तत्र हेत्वसिद्धेश्च । नापि बाधप्रतिरोधौ; प्रतीपमानाभावात् । न च प्रागभाववत्त्वमुपाधिः, तस्या-ऽन्योन्याश्रयतया असिद्धेः वक्ष्यमाणत्वात् । तर्हि परमाणूत्पत्तिसाधनं धर्मिग्राहकमिति चेत्; न, धर्मिप्रत्ययात् साध्याभावासिद्धेः । अथाणूनामाद्यावयवत्वात् तत्प्रत्ययादेव प्रागसतः सत्तासमवायलक्षणोत्पत्तेरभावः सिद्ध्यतीति मतम् । सिद्ध्येदेवं यद्युक्तरू-पोत्पत्तिः स्यात्; सा चान्योन्याश्रयग्रस्ता । उत्पत्त्यपेक्षया हि प्रागसत्त्वं विवेक्तव्यम् । तदपेक्षया चोत्पत्तिर्विवेक्तव्येति । ननु प्रयोगान्तरबाधः स्यात; तथाहि-अयं कुम्भः एतद्व्यतिरिक्तकार्येतरमूर्तान्योन्याभाववान् कार्यत्वात्[3] स्तंभवदिति ; न, विपक्षे बाधाभावात् । अन्योन्याभावादेः साध्यस्य च सिद्धत्वात्[4] । विशिष्टस्य च साध्यस्य तवाप्रसिद्धत्वात् । अतो न धर्मि-

---

1. उक्तं हि 'दिग्विभागोऽविभागेऽपि व्योम्नि यद्वत्प्रकल्पितः' इति 2. अस्मदभिमतात्मनः तवासिद्धेः
3. कार्यातिरिक्तमूर्ताप्रसिद्धेः तदन्योन्याभावस्यापि न प्रसिद्धिरत आह-एतद्व्यतिरिक्तेति ।
ततश्च पक्षीकृतकुम्भस्य तदितरकार्यान्यमूर्तान्यत्वे व्याघातपरिहाराय नित्यमूर्तसिद्धिरिति भावः ।
4. एकैकस्य साध्यत्वे दोषोऽयम् ।

ग्राहकबाधः। तर्हि परमाण्वसिद्धेराश्रयासिद्धिः स्यात्; न, अणुपरिणामतरतमभावविश्रामभूमेः वादिप्रसिद्धिसिद्धत्वात्। तर्ह्यणूनामारम्भकाभावः, समवायिकारणाभावात्; न्यूनपरिमाणं हि समवायिकारणं, तदभावे कथय कथं परमाणूत्पत्तिसंभवः; न, अयमसंभवः विवर्तपक्षे, परिणामपक्षे वा? तत्र हि आकाशादेः महतोऽपि केशमशकादिभ्रमविषयहेतुता प्रसिद्धा। भूगोलकस्य महतोऽप्यणुरङ्कुरादिपरिणामः प्रसिद्धः। तस्मात्कालकाशादि सर्वं कार्यमिति सिद्धम्। वियदादिभूतपञ्चककार्यं च शरीरादि।

ननु मनुष्यादिशरीरं न वियदादिभूतपञ्चकारब्धम्, प्रत्यक्षत्वात् कुंभवत्; विपक्षे च प्रत्यक्षाप्रत्यक्षवृत्तिशरीरमप्रत्यक्षं स्यात्। वातवनस्पतिसंयोगवत्। दूषणान्तरविरहे त्वविवाद एव। तस्मान्मनुष्यादिशरीरं पृथिव्याद्येकैकभूतारब्धमास्थेयम्; न, आगमविरोधात्। छान्दोग्ये तावत् तेजोऽबन्नानां भूतानां देवताशब्दोदितानां "नामरूपे व्याकरो" दिति सृष्टिमुक्त्वा "तासां त्रिवृतं त्रिवृतमेकैकामकरो"दिति त्रिवृत्करणमुच्यते। अतः पञ्चभूतसर्गश्रुतावपि पञ्चीकरणं गुणोपसंहारन्यायेन सिद्ध्यति। ननु यदि वियदादीनि प्रत्येकं पञ्चभूतात्मकानि, तदा कथं तेषु 'एवं वियदित्थं वायुरि'त्यादि व्यवस्थितो व्यवहारः स्यात्? इत्थं-विभागो हि तेषामुत्पत्तिवदीश्वराधिष्ठितेभ्यः कर्मभ्यो द्विधा द्विधा प्रथमं जायते। ततः पञ्चानामर्धानां प्रत्येकं चतुर्धा विभागः, तेषां चतुर्णां स्वार्धभागं विहायेतरेष्वर्धेषु प्रत्येकमेकैकशः प्रवेशः। एवं परिशिष्टेष्वपि चतुर्षु प्रवेशः। अतो वियदादयः प्रत्येकं पञ्चभूतात्मका यद्यपि, तथापि भूयोभागावष्टम्भेन तेषु व्यवस्थितो व्यवहार उपपद्यते। तथा च भागवतमौपनिषदं सूत्रम् "वैशेष्यात्तु तद्वादस्तद्वादः" (ब्र. सू. २-४-२२) इति। अपि च परैरप्येवं शब्दान्तरेणोच्यते। तैरपि हि तत्र तत्र भूतान्तरकार्ये भूतान्तरावष्टंभोऽभिधीयते। तस्मात् पञ्चभूतात्मकानि भूतानीति सिद्धम्। तादृग्भूतारब्धं च शरीरम्। तत आगमविरोधात् शरीरस्य न पञ्चभूतारब्धत्वाभावोऽनुमेयः। दृष्टान्ते साध्यविरहाच्च; कुम्भादयोऽपि हीष्यन्ते पञ्चभूतारब्धाः। शरीरं चाप्रत्यक्षं कुतः स्यात्? न तावदप्रत्यक्षाश्रयत्वात्; त्र्यणुकस्यापि तथात्वप्रसङ्गात्। नापि प्रत्यक्षाप्रत्यक्षवृत्तित्वात्; सत्वादिजातेरप्रत्यक्षत्वप्रसङ्गात्। अथ प्रत्यक्षाप्रत्यक्षारब्धत्वादप्रत्यक्षता; न, घटादेरपि तथात्वप्रसङ्गात्, कपालादृष्टाद्यारब्धत्वात्; यदि प्रत्यक्षाप्रत्यक्षसमवेतं कार्यमप्रत्यक्षमिति नियमः, तदा भूगोलकस्यापि तथात्वं स्यात्। तदवयवा हि केचिन्न कस्यचित्प्रत्यक्षाः। तथापि ते प्रत्यक्षयोग्या इति चेन्न; तदभावात्; न हि ते अतीन्द्रिया योग्यताऽस्ति; वस्तुस्वरूपमात्रं चातिप्रसङ्गि। प्रत्यक्षक्रियोपलक्षितं स्वरूपं योग्यत्वमिति चेन्न। उपलक्षणमपि हि संबन्धं विना न व्यावर्तकमतिप्रसङ्गात्। न च सर्वेषां पृथिव्यवयवानां प्रत्यक्षान्वयः संभवी। अतस्ते पृथिव्यवयवाः केचिदप्रत्यक्षा एवेति पृथिव्या अप्रत्यक्षत्वप्रसङ्गः। तस्माच्छरीराप्रत्यक्षताप्रसङ्गो विपर्ययापर्यवसायी प्रशिथिलमूलश्च। किञ्च त्र्यणुकं अप्रत्यक्षानेकसमवायिकार्यं न भवति प्रत्यक्षत्वात्, कुंभवत्; विपक्षे च त्र्यणुकमप्रत्यक्षं स्यात् वियद्वायुसंयोगवदित्यत्र ते यथोत्तरं तद्वत्प्रकृतेऽपि द्रष्टव्यम्। तस्माद्वियदादिकार्यत्वं शरीरस्य नानुपपन्नम्। इन्द्रियप्राणान्तः करणान्यपि भौतिकान्येव न प्राकृतानि, अन्नावयवैस्तेषामुपचयदर्शनात् प्रकृतिविकारत्वे मानाभावाच्च।

बुद्ध्यादयोऽन्तः करणपरिणामा नात्मगुणाः "कामः सङ्कल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत् सर्वं मन एव" इति श्रुतेः (बृ. १-५-३.) न च बुद्ध्यादीनामात्मगुणत्वे मानमस्ति। 'अहमनुभवामी'त्यादिप्रत्यक्षं मानमिति चेन्न; आत्मनोऽप्रत्यक्षत्वात्; अन्यथा स्वात्मनि वृत्तिविरोधात्। अहङ्कारात्मनोर्भेदावगमाच्च। छन्दोगे हि अहङ्कारादेशात

पृथगात्मादेशः पठ्यते । "अथातोऽहङ्कारादेशः" "अथात आत्मदेशः" इति । ज्ञानादीनां द्रष्टृधर्मता परिशेषसिद्धेति चेन्न: उक्तागमात् तेषां मनोरूपतावगमात् परिशेषासिद्धेः, "साक्षी चेता केवलो निर्गुणश्च" "असङ्गो ह्ययं पुरुषः" "एकमेवाद्वितीयं" इत्यादिश्रुतिविरोधाच्च । तस्मात् बुद्ध्यादयो मनोधर्मा एव । ननु ज्ञानस्य मनोधर्मत्वे तदेव द्रष्टृ नात्मा । तथाच सति "नान्योऽतोऽस्ति द्रष्टे" त्यादिश्रुतिविरोधो दुर्वारः स्यात्; न, ज्ञानादिमदुपाधित्वेनाविरोधात्। तथाहि-शुक्लोऽपि स्फटिकगिरिश्चित्रवस्तूपाधौ चित्रोऽवभासते । तथा ज्ञानादिसङ्गरहितोऽप्यात्मा अविद्याध्यारोपितज्ञानादिमदुपाध्यवच्छिन्नतया ज्ञानादिमानवभासते । तथा च शास्त्रम्—"ध्यायतीव लेलायतीवे"ति"सधीः स्वप्नो भूत्वे"ति च । साक्षात् ज्ञानादिमत्वकल्पने त्वसङ्गादिश्रुतिविरोध उक्तः । तस्मात् ज्ञानादिपरिणामित्वेऽन्तः करणस्य न विरोधगन्धोऽपि। ज्ञानं च व्यवहारतः प्रमाणादिभेदभिन्नम्। आचार्यमते तु भ्रान्त्याद्यज्ञानमेव, यत आहुः-"अविद्या वेद्यैः सह भ्रम" इति। तत्र प्रमाणमज्ञातविषयं ज्ञानम् । ननु देशादिव्यवहिताज्ञातविषयं भ्रान्तिज्ञानमतोऽतिव्याप्तिरिति; न, भ्रान्तिभातस्यान्यत्र सत्वे मानाभावात् । अज्ञातपदेनाज्ञानोपलक्षितं विवक्षितमतो न विप्रलंभकवाक्यार्थज्ञानेऽतिव्याप्तिः । नहि तीरे फलसत्वमज्ञातमस्ति यदज्ञानेनोपलक्ष्येत, अन्यथा तज्ज्ञानमपि प्रमाणं स्यात् । कथं तर्हि तदज्ञातमिति व्यवहारः? तदाकारविकल्परूपज्ञानाभासाभावादिति ब्रूमः, यथा सूच्यग्रे पर्वतावस्थानमज्ञातमिति व्यवहारः। नह्यसदाश्रयो भावरूपो धर्मोऽज्ञातत्वं वा संभवति। नच धारावाहिकेषु विज्ञानेष्वव्याप्तिः; उत्तरोत्तरकालीनस्यापि अज्ञातविषयत्वात्; नहि पूर्वतरं प्रत्यक्षमुत्तरकालीनं वस्त्ववलम्बते तस्य वर्तमानग्राहित्वात् ।

नन्वेवमपि स्मृतावतिव्याप्तिः । सा हि 'स' इत्यगृहीतविषयापि प्रमाणम् । नापि 'स' इत्याकारं प्रत्ययान्तरं संभवतीत्युक्तम् । अतः परिशेषात् 'स' इति स्मृतेरेवाकारः । ननु अगृहीतविषयत्वे स्मृतेः स्मृतिता न स्यात् । तस्याः संस्कारमात्रजत्वेनानुभूतमात्रविषयत्वात्; न, संस्कारमात्रजत्वेऽपि स्मृतेः संस्कारार्पितविषयतया 'स' इत्याकारोपपत्तेः । तस्मात् स्थिताऽतिव्याप्तिरुक्तलक्षणस्य; उच्यते, स्मृतेः 'स' इत्याकारता नोपपद्यते, 'स' इत्याकारशून्यानुभवविषयगोचरत्वादनुवादस्येव । नच संस्कारार्पितविषयतयोक्ताकारता स्मृतेः; पदात् पदार्थस्मृतेश्च तथात्वादर्शनात् । का तर्हि तदाकारस्य गतिः? स्मृत्याकारत्वेऽस्य न काचिदपीति ब्रूमः । अत एव नायमाकारः स्मृतेः । किन्तु पूर्वकालः साक्षिविषयोऽयमवभासते, 'यथेदानीन्तनो घट' इति वर्तमानकालः । साक्षी किल नित्यानुभवरूपः सर्वस्याधिष्ठानतया साक्षादेव भासकः श्रुतिसिद्धः । उक्ता हि श्रुतयः "कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता" इत्याद्याः । साक्ष्यन्तर्भूतैव सामग्री प्रत्यभिज्ञाज्ञानस्य, अतः 'स' इत्याकारो न विरुद्ध्यते । तथाभूतसाक्षिणमनभ्युपगच्छतश्च कालदिगाकाशादयो नापरोक्षतयाऽवभासेरन् । नहीदानीं पूर्वस्यां दिशि निर्मलमाकाशमिति मानतः सिद्ध्येत्, इन्द्रियसंबन्धाद्यभावात् । बाधाभावाच्च यथार्थ एवायं निश्चयः । सुप्तोत्थितस्य च 'चिरंसुप्तः''सुखमास'मिति परामर्शो न स्यात् । मतान्तरेऽप्यनुमानत इत्थं सिद्ध्यतीति चेत् । न, सुषुप्तिकालतत्कालीनधर्म्याद्यसिद्धेः । **प्रपञ्चितं चैतदिष्टसिद्धिविवरणे रत्नदीपावल्यां च** । तस्मात्रोक्तविधसाक्षिणि विवदितव्यम् । अतो नोक्तविषयातिव्याप्त्यादि प्रमाणलक्षणस्य ।

नन्वज्ञातविषयं चेत्प्रमाणं कथं तर्हि प्रमाणसंप्लवः संभवेत् ; स्फुटं चैतत्[1] पृच्छसि, न कथंचित् ; निवर्त्याज्ञानभेदेन विषयभेदात् । ननु नाज्ञानं कुंभादिमानस्य विषयः, किन्तु वस्तुमात्रम् । तत्र च मानान्तरप्रवेशात् तवापि मानसंप्लवः

1. A चेत्पृ

स्यात्। मैवम्। अज्ञाननिवृत्त्यवच्छिन्नस्य भिन्नत्वात्। तथाभूतं हि वस्तु मानजन्यातिशयशालितया तद्विषयमतो निरवद्यमज्ञातविषयं ज्ञानं मानमिति लक्षणम्।

अन्ये तु सम्यगनुभवसाधनमिति मानलक्षणमाहुः। तत्र साधनं करणं विवक्षितम् आहोस्वित्कारणमात्रम्? आद्येऽव्याप्तिः; ईश्वरप्रमा हि ते नानुभवकरणम्। द्वितीयेऽदृष्टादिनाऽतिव्याप्तिः। नचैकेन मानेन समस्ता मानव्यक्तयः शक्या ग्रहीतुम्। नापि बहुभिः, मानानां संभूयकारित्वाभावात्। अतो धर्म्यसिद्धिः। अथ जातिद्वारा व्यक्तीनामशेषतो ग्रह इति चेत्; न, सर्वव्यक्त्यसिद्धौ तासां जात्यवच्छेदस्यापि असिद्धेः। जात्यवच्छेदेन लक्षणप्रवृत्तौ च जात्यादीनां लक्षणं न स्यात्। तत्रौपाधिकत्वेन धर्मिसंग्रह इति चेत्; न, स्वरूपातिरिक्तस्यौपाधिकस्य त्वयाऽनभ्युपगमात्। समस्तविपक्षासिद्धौ च ततो व्यावृत्त्यनिश्चयात् सन्दिग्धविरुद्धता। तथा सकलव्यावृत्त्यसिद्धेः व्यर्थविशेषणता।

यत्तु अनुभूतिर्मानमिति लक्षणम्, तत्राप्युक्तरीत्या धर्म्याद्यसिद्धिः द्रष्टव्या। उक्तरीत्या धर्म्याद्यसिद्धिस्तवापि तुल्येति चेन्न। समुदायस्य लोकप्रसिद्धिसिद्धस्य धर्मित्वाद्युपपत्तेः। तस्मादस्मन्मत एव प्रमाणलक्षणादिव्यवहारः सिद्ध्यति। न तु मानादेव सर्वं सिद्ध्यतीति मते। तस्मात्तन्मतं पूतिकूष्माण्डवदसारमुपेक्षणीयम्।

तत्पुनर्मानं द्विविधम्। तत्वावेदनमतत्वावेदनं चेति। तत्राद्यमौपनिषदमात्मज्ञानम्। द्वितीयस्त्वविचारसुन्दरव्यवहारसिद्धाज्ञातविषयं ज्ञानम्। एतच्च प्रत्यक्षानुमानागमोपमानार्थपत्त्यभावाख्यं षड्विधम्। तत्राज्ञातार्थविषयं इन्द्रियार्थसन्निकर्षजं ज्ञानं प्रत्यक्षम्। तत् द्विविधम्। योगिप्रत्यक्षमयोगिप्रत्यक्षं चेति। तत्र च योगजातिशयविशेषादतीतादिविषयं योगिप्रत्यक्षम्। तच्च मनोमात्रविषयसन्निकर्षादपि जायते युक्तावस्थायाम्। वियुक्तावस्थायां तु देशादिव्यवहितमतिसूक्ष्म रूपादि सदेव विषयीकरोति। न त्वतीन्द्रियं धर्मादि। यथाहुर्भट्टाचार्याः—

"यत्राप्यतिशयो दृष्टः स स्वार्थानतिलङ्घनात्।
दूरसूक्ष्मादिदृष्टौ स्यान्न रूपे श्रोत्रवृत्तिता"इति।

तस्मान्न धर्मादिविषयं योगिप्रत्यक्षम्। तन्मानाभावात्। यत्तु धर्मादि कस्यचित्प्रत्यक्षं प्रमेयत्वात्कुम्भवदित्यनुमानम्। तत्र विपक्षे बाधकाभावात्, कृत्स्नधर्म्यसिद्धिश्च। एकश्चेद्धर्मी तदा विशेषणवैयर्थ्यं इतरसमस्तातीन्द्रियेषु च मानासिद्धेषु साध्यसाधनवत्वानिश्चयात् सन्दिग्धो व्यभिचारः। विशिष्टपदार्थाभावाच्चाप्रसिद्धविशेषणः पक्षः, हेत्वसिद्धिः, साध्यसाधनविकलो दृष्टन्तः इत्यलमतिदुर्बलहिंसया। तस्मान्नातीन्द्रियविषयं योगिप्रत्यक्षम्। अयोगिप्रत्यक्षं चात्मेन्द्रियमनोऽर्थसन्निकर्षजम्। तत्पुनर्द्विविधम्। सविकल्पकं निर्विकल्पकं च, तत्र विकल्पो भेदः तेन सह वर्तत इति सविकल्पकम्। तद्विपरीतं निर्विकल्पकम् प्रथमाक्षसन्निपातजं वस्तुमात्रविषयं ज्ञानम्। अन्ये तु शब्दजल्पं विकल्पमाहुः; तद्विपरीतमविकल्पकम्। तद्युक्तविषयं सविकल्पकमिति। तदसत्। शब्दसंबन्धस्य चाक्षुषत्वप्रसङ्गात्। नच कुम्भज्ञानस्य कुम्भशब्दसंबन्धः संभवेत्। तदभ्युपगमेऽपि सविकल्पकोऽनुव्यवसायस्ते न स्यात् मनसः केवलस्य शब्दाग्राहकत्वात्। शब्दसङ्केतग्रहसंस्कारस्य चक्षुःसहकारित्वान्नोक्तदोष इति चेन्न। अनियमप्रसङ्गात्। तथाहि, आलोकादिमेलकेऽपि सविकल्पकोत्पत्तिः नियता न स्यात्,

संस्कारोद्बोधस्यानियतत्वात् । तस्मात् जात्यादिविशिष्टग्रह एव सविकल्पकज्ञानमिति सिद्धम् । सम्यग्व्याप्यज्ञानादज्ञात-व्यापकज्ञानमनुमानम् । व्याप्तिस्तु निरुपाध्यविनाभावः । अत्रापि सिद्धविषयमनुमानं माभूदित्यज्ञातेत्युक्तम् ।

यत्त्वनुमाने साध्यानुपपत्त्यभिधानम्—"विशेषेऽनुगमाभावः सामान्येसिद्धसाध्यतेति" ; तदसत् , अग्निमत्त्वादि-सामान्यमात्रस्य साध्यत्वात् । सामान्यं हि पक्षधर्मतया साध्यम् । विशिष्टं दृष्टान्ताननुगतं कथं सिद्ध्यतीति चेत्; अनुगतेन व्याप्तस्य हेतोः पक्षधर्मताबलादिति ब्रूमः । व्याप्तिपक्षधर्मतयोरेकैकस्याव साधनत्वेऽपि मिलितयोः साधनता न विरुद्ध्यते । संस्कारसंप्रयोगयोरिव प्रत्यभिज्ञासाधनता । किञ्चानुमानापलापप्रतिज्ञा हेतुशून्या अतिप्रसङ्गिनी; हेत्वभि-धाने त्वनुमानसिद्धिः । तस्मादनुमाऽनपास्या । अनुमानभेदास्तदाभासभेदाश्च पूर्वत्र पूर्वपक्षानुसारिणा दर्शिताः । अत्र तु सिद्धान्ताविरोधिनः उदाहरणतया त एव द्रष्टव्याः ।

अभिधानशक्तिजोऽज्ञातविषयो बोध आगमः । उक्तशक्तेः भावनाख्या क्रियाऽपि जायत इति केचित् । अतो बोध इत्युक्तम् । तस्याश्चान्वितार्थबोधोपजन इत्यन्विताभिधानमतम् । अत्र केचित् कार्यान्विते सर्वपदानां शक्तिरित्याहुः । तथाहि-गवानयनादिक्रियालिङ्गावसेया पदशक्तिः, तत्र कथय कथं क्रियासंसर्गोऽपास्यः स्यात् । अथ यथा ते गवानयनादि-कार्यविशेषलिङ्गावसेयाऽपि पदशक्तिर्न कार्यविशेषान्वितं विषयीकरोति; किन्तु कार्यमात्रान्वितम् ; तथा कार्यमात्रमपि हास्यति । स्थास्यति च योग्येतरान्विते, युक्तं चैतत् लाघवादिति मतम्; न, युक्तो हि विशेषत्यागो विशेषाणामानन्त्यात् । कार्त्स्न्ये-न तत्र शक्तिग्रहाभावप्रसङ्गात्; प्रथमप्रतिपन्नस्य कार्यान्वयस्य तु त्यागे न हेतुरस्ति । लाघवमात्राच्च विषयापरिग्रहे योग्येत-रान्वितेऽपि शक्तिर्न स्यात् । तस्मात्कार्यान्वितविषयैव सर्वपदशक्तिरिति स्थितम्; न, कार्यपदस्योक्तशक्त्यभावप्रसङ्गात् कार्ये कार्यान्वया[1]संभवात् । अथान्वितं कार्यं सर्वपदशक्तेः विषयः; न, सर्वपदानां परस्परं पर्यायत्वप्रसङ्गात् तस्माद्योग्येतरान्विते स्वार्थे सर्वपदानां शक्तिरित्यन्विताभिधानमास्थेयम् । अभिहितान्वयमते तु गवाद्याकृतय एव केवलाः साक्षात्पदशक्तिगो-चराः । तद्योगात् व्यक्तयोऽप्यभिधेयाः । अभिहितानामेव ह्यन्वयो वाक्यार्थतयेष्यते । एवमुक्तशक्तिजन्यं ज्ञानमा-गमः । तत्संबन्धात वर्णात्मकः शब्दोऽप्यागम इति गीयते । ननु न वर्णाः प्रत्येकं गवाद्यर्थबोधकाः , तथा अदृष्टे-रनिष्टेश्च । नापि तत्समुदायः, क्रमभाविनां क्षणिकानां समुदायतदुपलंभयोरभावात् । का तर्हि पदस्य गवाद्यर्थबोध-कस्य वाक्यादेश्च प्रसिद्धागमसमानस्य गतिः? स्फोट इति चेन्न, मानाभावात् । गवादिपदादिष्वेकः शब्द इति प्रत्ययो-ऽत्र मानम्, अनेकेषु वर्णेषु तदसंभवादिति चेन्न, वर्णादिषु क्रमोपलब्धेष्वप्यन्त्यवर्णोपलब्ध्यनन्तरमेकस्मृत्युपारूढेष्वेकार्थ-बोधकेष्वेकः शब्द इति प्रत्ययोपपत्तेः । अवश्यं चैकस्मृति[2] समारोहेण वर्णसमुदायोऽभ्युपेयोऽन्यथा स्फोटाभिव्यक्तेरप्यभाव-प्रसङ्गात् । तस्यैकैकवर्णानभिव्यङ्ग्यत्वात् । तस्माद्वर्णा एव बोधकाः शब्द इत्यास्थेयम् । अत एव श्रीमच्छारीरकभाष्य-कृद्भिराचार्यमतमुक्तम्—"वर्णा एव तु शब्द इति भगवानुपवर्ष " इति ।

तस्योभयविधा वृत्तिः मुख्या, अमुख्या चेति । तत्र रूढिर्यौगिकी चेति मुख्या द्विविधा । तत्राद्या गवादिपदावयविशक्त्या बोधनम् । द्वितीया तु लम्बकर्णादिपदानां अनेकावयवशक्त्या बोधनम् । अमुख्याऽपि गौणी लाक्षणिकी चेति द्विविधा ।

---

1. c. कार्यान्तरासं
2. c. स्मृत्युपारो

मुख्यार्थे विरोधात् तद्गुणयोगादमुख्ये वृत्तिर्गौणी। यथाऽग्निपदस्य माणवके। तथा मुख्यार्थे विरोधात् तत्सम्बन्धिनि वृत्तिर्लक्षणिकी। यथा गङ्गापदस्य घोषवासक्षमे तीरे वृत्तिः। एषा जहत्स्वार्था। अजहत्स्वार्था यथा शोणस्तिष्ठतीति मुख्यार्थयुक्तेऽर्थे वृत्तिः। एवं स्वार्थभागत्यागलक्षणा जहदजहद्रूपा। यथा सोऽयमिति। एष आगमसंक्षेपः।

सदृशदर्शनादज्ञातार्थज्ञानमुपमानम्। यथा गोसदृशगवयदर्शनात् गवयसदृशो गौः इति ज्ञानम्। अनुपपन्नदर्शनात् अज्ञातोपपादके बुद्धिरर्थापत्तिः। सा द्विविधा दृष्टार्थापत्तिः श्रुतार्थापत्तिश्चेति। तत्रार्थानुपपत्तिनिमित्तकमर्थान्तरज्ञानं दृष्टार्थापत्तिः। यथा जीवितो गृहेऽभावानुपपत्तिनिमित्तकं बहिर्भावज्ञानम्। अनुपपद्यमानवाक्यैकदेशनिमित्तं वाक्यैकदेशान्तरज्ञानं श्रुतार्थापत्तिः–यथा पीनो देवदत्तः दिवा न भुङ्क्ते इति वाक्यैकदेशानुपपत्तितो रात्रौ भुङ्क्ते इति वाक्यैकदेशज्ञानम्
प्राप्तानुपलब्धिनिमित्तकमर्थाभावज्ञानमभावः। यस्त्वागमाद्यन्तर्भावक्लेशः केषांचित् क्लेश एव सः। तथाहि शास्त्रं तावत् अविनाभावनिरपेक्षं शक्तिमात्रसापेक्षं बोधयन्नानुमानीकर्तुं शक्यम्। ननु शब्दार्थयोरविनाभावसंभवे न शक्तिः संकेतो वा संबन्धान्तरं कल्पनार्हम्; न, तदसंभवात्; न हि देशतः कालतो वाऽर्थेन शब्दस्याविनाभावः समस्ति। देशाद्यनियतविषयत्वात्। वृक्षस्वभावा शिंशपेव शब्दस्यार्थस्वभावता तु भवतापि नेष्यते। अनुपलब्धिविरुद्धा च। कथञ्चिदविनाभावेऽपि शास्त्रस्य प्रत्यक्षवन्नानुमानतासंभवः। पक्षधर्मतादिग्रहनिरपेक्षत्वात्। तथाप्यविनाभावेनैव तस्य बोधकता, संबन्धान्तरासंभवादिति चेत्; न, न हि संबन्धान्तरस्यासम्भवः, कार्यानुगुणयोग्यतारूपस्याभ्युपगमात्। अन्यथा कार्यार्थिनः कारणे प्रवृत्तिः नियता न स्यात्। कारणत्वानुमानपूर्विका हि सा प्रवृत्तिः। तत्र कार्यानुगुणव्यापारवत्त्वं कारणत्वमनुमेयम्, किं वा स्वरूपम्? अथवा तदतिरिक्तातिशयवत्त्वम्? आद्ये बाधः। द्वितीये सिद्धसाधनता। साध्याविशिष्टता च। तृतीये त्वसद्दिष्टसिद्धिः। एतेन नियतपूर्वभावित्वानुमानं निरस्तम्। अत्रापि हि आद्य इव बाधः, क्वचित्प्रवृत्तिविषयस्यातथात्वदर्शनात्। पूर्वभावित्वसंभावनाज्ञानात् कृष्यादौ प्रवृत्तिर्यागादौ तु शास्त्रीयनिश्चयादिति चेत्; न, शास्त्रं हि तेऽनुमानम्। तत्र च दृष्टान्ताभावात् निश्चयानुपपत्तिः। न हि नियामकातिशयमन्तरेण नियतपूर्वभावित्वं संभवति। तस्मात् स्वशक्त्याऽवबोधकत्वात् शास्त्रं नानुमानान्तर्भूतम्। तथा नोपमानस्यापि अनुमानता; पक्षधर्मतादिग्रहनिरपेक्षत्वात्। गवयगतसादृश्यस्य च व्यधिकरणत्वात् न गोगतसादृश्यहेतुता। शब्दाभावेऽपि उपमानस्य दर्शनात् न शब्दान्तर्भावः। ननु अश्वविसदृशगवयदर्शनात् 'गवयविसदृशोऽश्व' इति प्रत्ययस्य का गतिः? उपमानतेति ब्रूमः। नच सदृशदर्शनादित्यादिलक्षणविरोधः। तस्योपलक्षणत्वात्। लक्षणं तु, वस्त्वन्तरदर्शनात् तत्प्रतियोग्यसन्निकृष्टवस्त्वन्तरधर्मदर्शनमुपमानमिति। अर्थापत्तेरपि नानुमानेऽन्तर्भावः। अविनाभावमनपेक्ष्य बोधकत्वात्, प्रत्यक्षवत्। अन्यथाऽनुपपन्नो ह्यर्थ उपपादकं बोधयति। न चाविनाभावोऽस्तीत्यनुमानत्वं, प्रत्यक्षस्यापि अनुमानत्वप्रसङ्गात्। यथा च धूमवत्त्वमग्निमत्त्वेऽनुपपद्यमानमेवानुमानानुगुणं बोधयदनुमानाङ्गं नानुमानम्, तथा जीवतो गृहे सत्त्वमन्यत्रासत्त्वव्याप्तत्वेन ज्ञातमनुमानमन्यत्र सत्त्वं गमयिष्यति। तथा अभावोऽपि नान्यत्रान्त[1]र्भवति। प्राप्तानुपलब्धेरेवाभावबोधदर्शनात्। लिङ्गतया सा व्यापकमभावं बोधयतीति चेत्; न, अभावानुमानानवस्थाप्रसङ्गात् तत्तदनुपलब्धेरपि अनुमेयत्वात्। लिङ्गं हि ज्ञातमेव गमकम्। अस्तु तर्हि प्रत्यक्ष एवाभावो न तु

---

1 c. नानुमानेन्तर्भवति।

मानान्तरं; न, इन्द्रियसन्निकर्षनिरपेक्षत्वात्। नचेन्द्रियसंबन्धविशेषणात् इन्द्रियबोध्यं क्वचित् दृष्टम्। कल्प्यं च न संभवत्येव, अभावज्ञास्यान्यथैवोपपत्तेः। प्रत्यक्षाभाववादिनाऽपि ह्यभावज्ञानेऽनुपलब्धिः कारणमिष्यते; अतोऽनुपलब्धेरेवाभावज्ञानोपपत्तेः नेन्द्रियसंबन्धः कल्पनीयः। तत्कल्पने चातिप्रसङ्गः स्पष्टः। गुरुत्वादेरपीन्द्रियविषयताप्रसङ्गात्। न च ते योग्यतातिरिक्ताऽस्ति, यस्याः गुरुत्वादावभावः कल्प्येत। तस्मादसंकीर्णान्येव षट् प्रमाणानि। अतो न प्रमाणसंप्लवोऽप्यास्थेयः। सर्वश्चायं प्रमाणादिव्यवहारो दुर्निरूपभेदाश्रयो देहात्मप्रत्ययपुरःसरश्च, सुषुप्तादावदर्शनात्। अतोऽविद्याविलास इति सिद्धम्। तस्मात् दृगात्मैवैकं परमार्थसत्यं वस्तु "एकमेवाद्वितीयं" "सत्यस्य सत्यं" इत्याद्यागमगम्यम्। दृश्यं तु कारणं कार्यं चापाततःसत्यम्। यथा देहात्मत्वम्। निरूप्यमाणं तु खकार्ष्ण्यमृगतृष्णिकाजलमाहेन्द्रजालस्वप्नगन्धर्वनगरतुल्यम्। तत्वतो दृक्संबन्धशून्यतया सिद्ध्यसम्भवात् "नेह नानास्ति किञ्चन" "मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति" "यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति" "इन्द्रो मायाभिः पुरुरूप ईयते" "वाचारम्भणं विकारः" इत्याद्यागमहतत्वात् जडत्वादिहेतुभिश्च। प्रपञ्चितं चैतत् इष्टसिद्धिविवरणे रत्नदीपावल्यां चेत्यलं विस्तरेणेति॥

पदार्थनिर्णयो जीयात् प्रतिपक्षातिशातनः।
श्रेयोऽर्थ्यारुरुक्षूणां दत्तहस्तावलम्बनः॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमन्नारायणज्योतिःशिष्येण
भगवता आनन्दानुभवेन विरचितः
पदार्थतत्वनिर्णयः
समाप्तः।

---

Pages 23 to 52 Printed at Sri Ramachandra Printing Works, Royapettah High Road, Madras 14.

ॐ

ब्रह्मविद्या

अद्वैतसभापत्रिका

Vol. I || APRIL—DECEMBER 1949 || No. 3 & 4

॥ श्री. ॥

# भगवत्पादोपदेशरत्नानि

(1) तद्धि कौशलं यद्बन्धनस्वभावान्यपि कर्माणि समत्वबुद्ध्या स्वभावान्निवर्तन्ते। (गी·भा 2-50)

(2) तावानेव हि पुरुषो यावदन्तः करणं तदीयं कार्याकार्यविषयविवेकयोग्यं, तदयोग्यत्वे नष्ट एव पुरुषो भवति (ibid 2-64)

(3) इन्द्रियाणां हि विषयसेवातृष्णातो निवृत्तिर्या तत्सुखं. न विषयविषया तृष्णा, दुःखमेव हि सा, न तृष्णायां सत्यां सुखस्य गन्धमात्रमुत्पद्यते। (ibid 2-67)

(4) या हि पुरुषस्य प्रकृतिः सा रागद्वेषपुरस्सरैव स्वकार्ये पुरुषं प्रवर्तयति। तदा स्वधर्मपरित्यागः परधर्मानुष्ठानं च भवति। यदा पुना रागद्वेषौ तत्प्रतिपक्षेण नियमयति तदा शास्त्रदृष्टिरेव पुरुषो भवति न प्रकृतिवशः। (ibid 3-34)

(5) धर्मोपि मुमुक्षोरनिष्टरूपत्वात् किल्बिषमेव। बन्धापादकत्वात् ॥ (ibid 5-1)

(6) देहमात्रात्मदर्शिनां हि प्रियाप्रियप्राप्ती हर्षविषादस्थाने न केवलात्मदर्शिनः, तस्य प्रियाप्रियप्राप्त्यसम्भवात्। (ibid 5-20)

---

॥ श्रीः ॥

# ॥ श्री भगवत्पादपराः श्लोकाः ॥

1 यद्भाष्यसागरजयुक्तिमणीन् प्रकीर्णान्
प्राप्याधुना कतिपयान् कवयो भवन्ति ।
तस्मै नमो जनमनोऽब्जदिवाकराय
कृत्स्नागमार्थनिलयाय यतीश्वराय ॥

(आचार्य बोधनिधिः)

2 सूत्रप्रग्रहवेदवाजिनि महन्मीमांसकस्यन्दने
तिष्ठन् भाष्यपिनाकमुज्ज्वलगुणं कृत्वात्मधीसायकम् ।
आकृष्य प्रदहन्नशेषविपदां मूलं पुराणां त्रयं
भूयान्नोऽभिनवः पुरारिरशुभस्योच्छित्तये शङ्करः ॥

(ऋजु विवरणव्याख्या)

3 आशैलादुदयात् तथास्तगिरितो भास्वद्यशोरश्मिभि
र्व्याप्तं विश्वमनन्धकारमभवद्यस्य स्म शिष्यैरिदम् ।
आराज्ज्ञानगभस्तिभिः प्रतिहतश्चन्द्रायते भास्कर-
स्तस्मै शङ्करभानवे तनुमनोवाग्भिर्नमः स्तात् सदा ॥

(सुरेश्वराचार्यः)

4 संसारदर्पपरिदष्ट विनष्टजन्तु-
सञ्जीवनाय परया कृपयोपपन्नः ।
ब्रह्मावबोधपरमौषधमुद्वहन् य-
स्तं शङ्करं परतरं भिषजां भजामि ॥

(अद्वैतबोधामृतम्)

---

॥ श्रीः ॥

# ஸ்ரீ ஜகத்குரு ஆசார்யாள் உபதேசம்.

ஸகல ச்ரேயஸ்ஸுகளுக்கும் காரணமான ஸர்வேச்வராராதனத்திற்கு முக்ய தினங்களில் ஒன்றாகிய பால்குன சுத்த ஏகாதசி (28—2—50) யன்று ஸாயங்காலம் ஸ்ரீ சந்த்ரமௌளீச்வரஸ்வாமி ஸன்னிதியில் ஸ்ரீமதாசார்ய சரணாள் பரபக்தி விஷயமாய் உபதேசம் செய்தார்கள். அது சமயம் ஷை ஸம்பந்தமாய் ஒரு க்ரந்தத்திலிருந்து உதாஹரித்த சுலோகங்களில் சில இங்கு குறிப்பிடப்பட்டிருக்கின்றன.

अपरोक्षानुभूतिर्या वेदान्तेषु निरूपिता ।
प्रेमलक्षणभक्तेस्तु परिणामस्स एव हि ॥

अणुर्बृहत्कृशस्स्थूलो गुणभृन्निर्गुणो महान् ।
इत्यादिवचनैर्भक्तो वैष्णवस्स्तौति केशवम् ॥

खवायुतेजोजलभूक्षेत्रज्ञार्केन्दुमूर्तिभिः ।
अष्टाभिरष्टमूर्तिं च शाम्भवः स्तौति शङ्करम् ॥

तवास्मीति भजत्येकस्त्वमेवास्मीति चापरः ।
इति किञ्चिद्विशेषेऽपि परिणामस्समो द्वयोः ॥

अन्तर्बहिर्यदा देवं देवभक्तः प्रपश्यति ।
दासोऽहं भावयन्नेव दाकारं विस्मरत्यसौ ॥

भक्तेर्ज्ञानं ततो मुक्तिरिति साधारणक्रमः ।
ज्ञानिनस्तु वसिष्ठाद्याः भक्ता वै नारदादयः ॥

कथयामि सदृष्टान्तं येनार्थः स्फुटतां व्रजेत् ।
स्यात्तापस्य च पापस्य गङ्गास्नानेन हि क्षयः ॥

यस्तु स्यात्तापशान्त्यर्थी तस्यापि स्यादघक्षयः ।
यस्तु स्यादघशान्त्यर्थी तापस्तस्यापि नश्यति ॥

तापपापक्षयौ स्नानं त्वयमेतत्समं द्वयोः ।
तथाप्येकस्तु शैत्यार्थी शुध्यर्थी तु द्वितीयकः ॥

यथैव भावभेदेन नामभेदस्तयोरभूत् ।
एवमेव बुधैर्यैस्तु देवो मुक्त्यर्थमाश्रितः ॥

भक्त्या ज्ञानमवाप्यैव ये मुक्ताः ज्ञानिनो हि ते ।
यैस्तु संसारविरसैर्भक्त्यर्थं हरिराश्रितः ॥

ततो भक्तिप्रभावेन स्वभावाज्ज्ञानमुद्गतम् ।
तज्ज्ञानं प्राप्य मुक्ता ये ते भक्ता इति वर्णिताः ॥

विरक्तिभक्तिविज्ञानमुक्तयस्तु समा द्वयोः ।
तथापि भावभेदेन नामभेदस्तयोरभूत् ॥

मुक्तिर्मुख्यंफलं ज्ञस्य भक्तिस्तत्साधनत्वतः ।
भक्तस्य भुक्तिर्मुख्यैव मुक्तिः स्यादानुषङ्गिकी ॥

भुञ्जते तत्पदं प्राप्ता अपि भक्तिरसायनम् ।
द्वैतं विना कथं भक्तिरिति तत्रोत्तरं शृणु ॥

द्वैतं मोहाय बोधात्प्राक् प्राप्ते बोधे मनीषया ।
भक्त्यर्थं कल्पितं द्वैतमद्वैतादपि सुन्दरम् ॥

आत्मारामाश्च मुनयो निर्ग्रन्था अप्युरुक्रमे ।
कुर्वन्त्यहैतुकीं भक्तिमित्थम्भूतगुणो हरिः ॥

---

# Advaita S'rutibhedanirasa.

*Advaita S'ruti bhedanirasa* which is now issued for the first time is a short treatise written in support of Advaita by refuting the dualistic interpretation of some Vedantic texts which are regarded by the Dvaitins as not in favour of Advaita. The auother declares that the text द्वा सुपर्णा सयुजा सखाया etc., (Mund. Up. 3—1) which sets forth two atmans and यस्य पृथिवी शरीरम् (Br. Up. 3—7—4) which shows that the earth is the body of Atman do not contradict Advaita since in the former text the two atmans referred to are Jiva and manas (according to Paingi Rahasya Brahmana) and the usage of the word शरीर in the latter should not be taken literally but metaphorically meaning conrollable like ones own body. Madhu sudana Sarasvati has met the dualistic interpretations of these texts in his अद्वैतसिद्धि but not *in extenso* as in the present work.

There is no mention of the author either in the beginning or the end of the work. The booklet is one of the three works transcribed from a manuscript of the late Mahamahopadhyaya Tata Subbaraya Sastriar of Vijayanagaram. The first of these is तत्त्वमस्यखण्डार्थनिरूपणम् by Sri Ramanandā Sarasvati a disciple of Raghavananda Sarasvati as mentioned in the Colophon. The second is a criticism of the dualistic interpretation of the Mahavakya 'Tatvamasi' and the third is the present work. There is a statement in the present work प्रत्यक्षविरोधस्य पूर्वमेव परिहृतत्वात् and this परिहार is found in the second book. From this we presume that this is also by the same Sri Ramananda. This Ramananda cannot be identified with the author of Bhasya Ratna Prabha since he himself states that he is the pupil of Govindananda and not Raghavananda. There is however some similarity of the Mangala Sloka of this Ramananda — viz

यस्याः प्रसादलेशेन मूढोपि विबुधाग्रणीः ।
कमलासनकान्तां तां वाग्विभूत्यै नमाम्यहम् ॥

to the Mangala sloka of Ramananda the author of Bashyaratna prabha which runs:—

यत्कृपालवमात्रेण मूढो भवति पण्डितः ।
वेदशास्त्रशरीरां तां वागीं वीणाकरां भजे ॥

S. S. Sastri.

॥ श्रीः ॥

श्रीरामानन्दसरस्वतीविरचितः ।

# ॥ अद्वैतश्रुतिभेदनिरासः ॥

ननु "द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते । तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योअभिचाकशीति" (मु.3-1-1) "अजामेकां लोहितशुक्लकृष्णां बह्वीं प्रजां जनयन्तीं सरूपाम् । अजो ह्येकोजुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः" (तै 4-12-10) इत्यादिश्रुतिविरोधान्नाद्वैतसिद्धिरिति चेत् ।

न, द्वा सुपर्णेत्यस्य "तयोरन्यः पिप्पलं स्वाद्वत्तीति सत्त्वम् । अनश्नन्नन्यो अभिचाकशीतीत्यनश्नन्नन्यो अभिपश्यति ज्ञः, तावेतौ सत्त्वक्षेत्रज्ञौ" इति बुद्धिक्षेत्रज्ञपरतया पैङ्गिरहस्यब्राह्मणे व्याख्यातत्वेन विरोधगन्धानवकाशात् । अजामेकामित्यत्रापि मुक्तसंसारिभेदप्रतिपादनेन अभेदपर इति जीवात्मनामेव भेदः प्रतिपाद्यते नतु जीवपरमात्मनोः । वस्तुतो भेदश्रुतयः सर्वा मानान्तरसिद्धभेदप्रतिपादनेनाभेदपरा इति न ताभिर्विरोधशङ्का ।

नचेश्वरप्रतियोगिकस्य भेदस्य जीवे प्रत्यक्षगोचरत्वेऽपि जीवप्रतियोगिकभेदस्य नेश्वरे प्रत्यक्षादिगम्यत्वमिति मानान्तरागम्यतद्भेदे तात्पर्यमावश्यकमिति वाच्यम् — ईश्वरः जीवप्रतियोगिकभेदवान् जीवनिष्ठभेदप्रतियोगित्वात् घटादिवदिति तत्सिद्धेः । समानसंवित्संवेद्यतया प्रतियोगित्वादिवद्भेदभाने बाधकाभावात् । न च भेदस्य मानान्तरगम्यत्वेऽपि तस्य त्रिकालाबाध्यत्वरूपसत्यत्वं न मानान्तरगम्यमिति भेदश्रुतीनां तत्सत्यत्वे तात्पर्यमिति वाच्यम् — तथा सति अद्वैतश्रुतेरत्यन्तबाधापत्तेः ।

तथाहि, सदेव सौम्येदमग्र आसीत् एकमेवाद्वितीयं, (छा-6-2-1) 'नेह नानास्ति किञ्चन, (बृ-6-4-) स एष नेति (बृ-6-2) इत्यादिभिः स्पष्टमद्वैतं प्रतिपाद्यते, तत्र सदेवेति वाक्ये सृष्टेःप्राक् सदेवासीत् नासत् कार्यमिति सद्भिन्नं सर्वं निषिध्यते अस्मिन् वने चूतवृक्षा एवासन् इत्यत्र वृक्षान्तरनिषेधवत् । तच्च सदेकं नाना वेति विकल्पे प्राप्ते एवं निर्धारयति—एकमेवाद्वितीयमिति पदत्रयेण सजातीयविजातीयस्वगतभेदनिरासः क्रियते ।

नेह नानास्ति किंचनेत्यत्र ब्रह्मणि भेदमात्रं निषिध्यते । न च ब्रह्मगतभेदनिषेधपरं नतु भेदमात्रनिषेधपरमिति वाच्यम्—किञ्चनेत्यनेन भेदमात्रनिषेधात् । ब्रह्मणि भेदाप्रसक्तौ तन्निषेधायोगाच्च । नह्युपनिषन्मात्रवेद्ये ब्रह्मणि प्रमाणान्तरेण भेदः प्रसक्तः येन तन्निषेधेन सार्थकता, भेदमात्रस्य तु प्रत्यक्षादिसिद्धस्य मिथ्यात्वप्रतिपादनेनार्थवत्ता । नचाभेदश्रुतीनामुपासनापरत्वमिति वाच्यम्—वाचं धेनुमुपासीतेत्यादिवद्विध्यश्रवणात् भेदश्रुतीनामप्युपासनापरत्वप्रसङ्गाच्च ।

न च निर्गुणश्रुतीनां हेयगुणनिषेधे तात्पर्यम्, न तु गुणमात्रनिषेधे,तथासति सगुणश्रुतीनामप्रामाण्यप्रसङ्गादिति वाच्यम्—व्यावहारिकगुणप्रतिपादनेन सगुणश्रुतीनां प्रामाण्ये संभवति निर्गुणश्रुतिसङ्कोचायोगात, अद्वैतश्रुतिविरोधाच्च । न च विश्वं सत्यमित्यादिप्रपञ्चसत्यत्वप्रतिपादकश्रुतिविरोधादद्वैतश्रुतीनां त्वमेवाहमितिवदौपचारिकत्वमिति वाच्यम्—

सर्वासामभेदश्रुतीनां सर्वशाखासु क्रियासमभिहारेणाधीयमानानामप्रामाण्यकल्पनामपेक्ष्य प्रपञ्चसत्यत्व-प्रतिपादकश्रुतीनामौपचारिकत्वमित्यपि सुवचत्वात् । एतेन भेदश्रुतीनामप्युपक्रमोपसंहाररूपषड्विधतात्पर्यलिङ्गयुक्तत्वादद्वैतश्रुतिपरिपन्थित्वं निरस्तम्, उक्तगत्या व्यावहारिकभेदप्रतिपादकत्वस्योक्तत्वात् ।

यत्तु 'सर्वं खल्विदं ब्रह्मे'ति 'आत्मैवेदं सर्व'मित्यादौ सामानाधिकरण्योपपादनम्--देवदत्तादिशब्दानां च शरीरवाचकानां शरीरिपर्यन्तत्वस्य लोकवेदयोर्दर्शनादपृथक्सिद्धविशेषणवाचिशब्दानां विशेष्यपरत्वव्युत्पत्तेश्च शरीरशरीरिणोश्चापृथक्सिद्धत्वात् विश्वस्य च सर्वस्य चेतनाचेतनात्मकस्यान्तर्यामिब्राह्मणे परमात्मशरीरत्वश्रुतेः । सर्वेषां प्रपञ्चवाचकशब्दानां ब्रह्मवाचकत्वे च ब्रह्मसामानाधिकरण्यश्रुतयस्सर्वा अपि लक्षणां विनैव साधु सङ्गच्छन्त इति विषाणिमतम् ।

तत्तुच्छम्, देवदत्तादिशब्दानां शरीरविशिष्टात्मवाचकत्वे च यथा देवदत्तस्सुखी दुःखीत्यादिरात्ममात्रविषयव्यवहारः देवदत्तः कृशः स्थूलः सुन्दरः इत्यादिशरीरमात्रविषयव्यवहारः शब्दान्तरानपेक्ष एव दृश्यते, यथा वा इन्द्रस्सुखी इन्द्रस्सहस्राक्षः, विष्णुस्सर्वज्ञः, विष्णुः नीलमेघश्यामः, इत्यादौ निष्कृष्टात्मशरीरवाचकशब्दान्तरसामानाधिकरण्याभावेऽपि आत्ममात्रविषयः शरीरमात्रविषयकश्च व्यवहारस्तथा पृथिव्यादौ व्यवहारादर्शनात्, न पृथिव्यादीनां मुख्यशरीरत्वम् अवयवसंस्थानविशेषविशिष्टशरीरवाचकानामेव तद्विशिष्टात्मपरत्वव्युत्पत्तेः । अन्यथा घटः जगत्कर्त्रेत्यपि विष्णुविषयकोऽनौपचारिको व्यवहारः प्रसज्येत । अत्र चेष्टापत्तौ सर्वेषां शब्दानां विष्णुवाचकत्वमेवाङ्गीक्रियताम् किं प्रपञ्चस्य तच्छरीरत्वमङ्गीकृत्य शरीरवाचकपदानां शरीरिपरत्वव्युत्पत्तिप्रतिपादनक्लेशेन ।

एवं च यथा तार्किकैः परमाणूनामीश्वरशरीरत्वमङ्गीक्रियते साक्षात्प्रयत्नविषयत्वात् तथा पृथिव्यादीनामपीश्वरनियम्यत्वात्तच्छरीरत्वव्यपदेश औपचारिक एव । ततश्चौपचारिकशरीरवाचकशब्दैर्नात्मसामानाधिकरण्यमुपपादयितुं शक्यम् । अतिप्रसङ्गस्योक्तत्वात् ।

किञ्च न शरीरमात्रवाचकस्य शरीरिपरत्वव्युत्पत्तिः कल्पयितुं शक्या 'देह आत्मा' 'शरीरमात्मा' इत्यादि प्रयोगस्यापि साधुतापत्तेः । वैदिकैश्च तत्रेष्टापत्तेः कर्तुमशक्यत्वात् । साङ्केतिकदेवदत्तादिशब्दानां कथंचिद्विशिष्टवाचकत्वेपि निष्कृष्टदेहवाचकानां शरीरकलेबरादिशब्दानां कथञ्चिदप्यात्मसामानाधिकरण्यस्य मुख्यवृत्त्या वक्तुमशक्यत्वात् । एवञ्च प्रपञ्चवाचकशब्दानामपि मुख्यवृत्त्या ब्रह्मसामानाधिकरण्यं वक्तुं शक्यम् ।

वस्तुतस्तु देवदत्तादिशब्दानामपि शरीरमात्रवाचकत्वमेव व्यवहारबलात्कल्प्यम् नतु तद्विशिष्टात्मवाचकत्वं, गौरवात् । लक्षणयैव क्वचित्सामानाधिकरण्यव्यवहारोपपत्तौ विशिष्टशक्तिकल्पनानौचित्यात्, अन्यथा नीलादिशब्दानामपि विशिष्टशक्त्यापत्तेः । तत्र च इष्टापत्तौ नानार्थकल्पनया लक्षणैव विलीयेत । यदि च शक्यसंबन्धस्य दृष्टस्यैव नियामकत्वसंभवे नादृष्टशक्तिकल्पनेति तदा प्रकृतेऽपि तुल्यम् । तस्मात्प्रपञ्चवाचकशब्दानां इदं सर्वमित्यादीनां निष्कृष्टवाचकानां न ब्रह्मादिशब्दैरैकार्थ्यं सामानाधिकरण्यं संभवतीति तन्नियन्तृलक्षणादिना सामानाधिकरण्यमुपपादनीयम् । तथा च घट्टकुट्यां प्रभातमायातम् । एतेन यत्र जगद्ब्रह्मणोः सामानाधिकरण्यं दृश्यते

तत्र प्रायेण तन्निमित्तमपि श्रुतौ दृश्यते 'तदनु प्रविश्य सच्च त्यच्चाभवदि'त्यादिषु। तथा च सदसदात्मकत्वाद्ब्रह्मणस्तद्रूपत्वेन न तत्सामानाधिकरण्यं युक्तमिति निरस्तम्। सर्वत्र तथा प्रवृत्तिनिमित्तानभिधानात्। तथापि सच्चिदात्मककार्यरूपत्वं वास्तवं न संभवतीति तदधिष्ठानत्वेन तत्कारणत्वेन वा तदात्मकत्वं वक्तव्यम्। तथा च सर्वं ब्रह्मेत्यादावपि लक्षणातो न मुक्तिः। न च प्रपञ्चस्य ब्रह्मकार्यत्वात् मृद्घट इत्यादिवत्सामानाधिकरण्योपपत्तिरिति वाच्यम्—आरम्भवादे प्रपञ्चब्रह्मणोरत्यन्तभेदेन सामानाधिकरण्यायोगात। ब्रह्मणो जगदुपादानत्वाङ्गीकारेऽपि तन्तवः पट इतिवत् सामानाधिकरण्यप्रसङ्गात्। सुवर्णमृत्त्वादेः कार्यकारणवृत्तित्वे च सुवर्णं कुण्डलं मृद्घट इति सामानाधिकरण्योपपत्तिः।

ब्रह्मणस्तु प्रपञ्चापेक्षया अत्यन्तविलक्षणत्वान्न कथञ्चिदपि लक्षणाव्यतिरेकेण समानाधिकरण्यनिर्वाहः। राजा राष्ट्रं अभवदित्यादिलौकिकवैदिकप्रयोगेष्वपि लक्षणयैव सामानाधिकरण्यं न प्रकारान्तरेणेति न न्यायेनापि प्रकृते सामानाधिकरण्यनिर्वाहः। तस्मादेवंविधस्थले चोरः स्थाणुरित्यादिवत् बाधायां सामानाधिकरण्यमिति सिद्धान्तः।

तथाहि-यथा स्थाणुं चोरत्वेन विपर्यस्य बिभ्यतं प्रति कश्चिदाप्त उपदिशति 'न चोरः स्थाणुर्माभैषी'रिति, तस्य चायमर्थः—त्वया यश्चोरत्वेन प्रतीतः स स्थाणुर्न चोरः अतो मा भैषीरिति। तथा प्रकृतेऽपि यदिदं सर्वं प्रतीयते तत्सर्वं ब्रह्मैव न तु प्रतीयमानः प्रपञ्च इति। 'उदरमन्तरं कुरुते, अथ तस्य भयं भवति' 'द्वितीयाद्वै भयं भवती'ति भेददर्शनस्य भयहेतुत्वप्रतीतेः "अभयं वै जनक प्राप्तोसि" इत्यभेददर्शनस्य भयनिवृत्तिहेतुत्वश्रुतेश्च। आरम्भणाधिकरणोदाहृतश्रुतिन्यायसहस्रैः प्रपञ्चस्य मिथ्यात्वाच्चोक्तरूपेणैव सामानाधिकरण्यं युक्तम्। एतेन एकपदलक्षणयैव राजा राष्ट्रमित्यादिवत्सामानाधिकरण्योपपत्तौ न पदद्वयलक्षणाङ्गीकार इति निरस्तम्।

प्रपञ्चस्य मिथ्यात्वेन बाधस्यैवोचितत्वात्। यत्त्वत्रेदं सर्वमिति चेतनाचेतनात्मकप्रपञ्चनिर्देशेन ब्रह्मत्वोक्तौ चिदंशे तादात्म्यम्, अचिदंशे बाध इति वैरूप्यमिति विषाणेनोक्तं तदबोधनिबन्धनम्। सर्वशब्दस्येदंशब्दसामानाधिकरण्येन अनिदमंशचित्परत्वासंभवादिदमंशस्य सर्वस्य बाध्यत्वेनैकरूपेण बाध्यत्वादेवमेव सामानाधिकरण्यात्। क्वचिदेतादृशस्थले इदंशब्दसामानाधिकरण्याभावेऽपि अनेन न्यायेन प्रपञ्चमात्रबाधपरत्वोपपत्तेः। चिदंशस्यापि जडत्वमङ्गीकृत्य इदमंशकोटिनिक्षेपस्य स्वमनीषामात्रकल्पितत्वात अनिदमंशस्यात्मशब्दोपात्ततया सर्वशब्दस्य तद्भिन्नसर्वपरत्वावश्यकत्वाच्च।

न च चोरः स्थाणुरित्यत्र चोरत्वविरोधिस्थाणुत्ववत् अत्र प्रपञ्चत्वविरोधिधर्मान्तरस्याभावात् कथं बाध इति वाच्यम्——प्रपञ्चाभावात्मकब्रह्मस्वरूपज्ञानस्यैव विरोधित्वेन धर्मान्तरानपेक्षत्वात्। प्रपञ्चाभावस्य ब्रह्मस्वरूपत्वेऽपि प्रकारत्वाविरोधित्वात्, विरोधिधर्मान्तरोपस्थानस्याप्रयोजकत्वात। तादृशस्वरूपप्रकाशनेऽपि विरोधसिद्धेः। प्रमेयवदितिज्ञानादावतिप्रसङ्गेन स्वरूपप्रकाशनेऽपि विशेषविषयत्वेनैव ज्ञानस्य विरोधित्वात्। प्रपञ्चाभावस्य ब्रह्मसमप्रकारत्वे भावाद्वैतपक्षे वा न किञ्चिदनुपपन्नम्।

यदपि एकाङ्गुलिनोक्तं—'अथ कस्मादुच्यते ब्रह्मेति, बृहन्तो ह्यस्मिन् गुणा' इति श्रुत्या ब्रह्मशब्दस्य गुणिवा-

चित्वनिश्चयात् 'तद्विजिज्ञासस्व, तद्ब्रह्मे'त्यत्र जिज्ञास्यत्वेन श्रुतस्य ब्रह्मशब्दस्यापि सगुणवाचित्वात्तन्निर्णयार्थं प्रवृत्तस्याथातो ब्रह्मजिज्ञासेत्यत्र ब्रह्मशब्दस्यापि सगुणवाचकतया तदनुरोधेनैव चतुर्लक्षण्या नेतव्यत्वान्न निर्विशेषब्रह्माद्वैतसिद्धिरिति । तदतिस्थवीयः ।

उपक्रमादिबलवत्तात्पर्यलिङ्गसहितपरस्सहस्रनिर्विशेषाद्वैतश्रुत्यनुरोधेन सत्यकामादिश्रुतिवत् बृहन्तो ह्यस्मिन् गुणा इति श्रुतेरपि व्यावहारिकगुणप्रतिपादनपरत्वात् । ब्रह्मपदस्य गुणवाचकत्वकल्पने मानाभावात् । "बृह बृहि वृद्धा"विति स्मृतिपर्यालोचनया अद्वैतश्रुत्यनुरोधेन च परिच्छेदत्रयरहितनिर्विशेषब्रह्मपरत्वस्यैवोचितत्वात् सगुणवाक्यानां सगुणोपासनाया अपि वैकुण्ठकैलासादिभोगद्वारा परममुक्तिसाधनत्वेन सार्थक्योपपत्तौ निर्गुणवाक्यबाधकत्वायोगात् । यथा 'सोमेन यजेते'ति सोमस्य यागसाधनत्वश्रुतावपि "सोममभिषुणोति सोममाप्याययति" "अण्व्या धारया गृह्णाती"त्यादिवाक्यपर्यालोचनया रसद्वारा साधनत्वं न साक्षादिति कल्प्यते, तद्वदनेकाद्वैतश्रुतिविरोधेन सगुणप्रतिपादकत्वस्यैव ब्रह्मपदे त्याज्यत्वाच्च ।

वेदान्तानामध्यारोपापवादाभ्यामद्वितीयब्रह्मप्रतिपादकत्वेन सगुणवाक्यानां विरोधगन्धाभावात् । पुराणादौ निर्गुणनिन्दायाः सगुणस्तुतेश्च, नहिनिन्दान्यायेन सगुणोपासनापरतया निर्गुणबाधकत्वायोगाच्च ।

भेददर्शनमास्थाय मुक्तिं वाञ्छन्ति ये नराः ।
ते महाघोरसंसारसर्पदष्टा न संशयः ॥

मन्यन्ते विश्वमात्मानं विभिन्नं परमेश्वरात् ।
ते न पश्यन्ति तं देवं वृथा तेषां परिश्रमः ॥

कटकमकुटकर्णिकादिभेदैः कनकमभिन्नमपीष्यते यथैकम् ।
सुरपशुमनुजादिकल्पनाभिः हरिरखिलाभिरुदीक्ष्यते तथैकः ॥

ऐतदात्म्यमिदं सर्वं नेहनानास्ति किञ्चन ।
अद्वैतमेव शास्त्रार्थः शम्भोः पादं स्पृशाम्यहम् ।

इत्यादीनां भेदनिन्दया अभेदप्रतिपादकानां कोटिश उपलब्धेश्च । एतेनोदाहृतश्रुत्या ब्रह्मशब्दस्य गुणपूर्तिवाचकत्वनिश्चयात् निर्गुणत्वस्य वाक्यगम्यत्वात् श्रौतसगुणत्वेन वाक्यगम्यनिर्गुणत्वबाध इति निरस्तम् ।

आनर्थक्यप्रतिहतानां विपरीतं बलाबलम् इति न्यायेन अभेदवाक्यैर्गुणश्रुतेरेव बाध्यत्वात् अन्यथा सोमश्रुत्या रसवाक्यानि बाध्येरन् ।

"अथकस्मादुच्यते परं ब्रह्मेति, बृहति बृंहयति वा तस्मादुच्यते परं ब्रह्मेती"ति श्रुत्या बृहतिधात्वर्थपरिच्छेदत्रयराहित्य एव ब्रह्मशब्दस्य शक्तिनिर्णयाच्च । गुणगतबृहत्त्वस्य गुणिशब्दप्रवृत्तिनिमित्तत्वासंभवाच्च । ब्रह्मनिष्ठगुणानां बृहत्त्वे ब्रह्मणोऽपि बृहत्त्वमौपचारिकमिति चेत् तर्हि न शक्तिः । गुणगतबृहत्त्वं प्रवृत्तिनिमित्तमङ्गी-

कृत्य गुणिनि शक्तिरिति चेत् रूपत्वं प्रवृत्तिनिमित्तीकृत्य रूपपदस्य घटेऽपि शक्तिप्रसङ्गात्। न च रूपपदस्य घटे प्रयोगो नास्तीति वाच्यम्—प्रयोगसंभवेऽपि नीलादिवद्गुणिनि लक्षणयैवोपपत्तौ शक्त्यकल्पनात्। अत एव बृहत्त्वविशिष्टगुणविशिष्टे शक्तिकल्पनमपि निरस्तम्।

तथा सति नीलादिन्यायेन लक्षणोपपत्तेः। तस्माद् ब्रह्मशब्दस्य न गुणविशिष्टशक्तित्वान्निर्गुणवाक्यविरोधः शङ्कनीयः।

## भेदश्रुतिविरोधः

एवं प्रत्यक्षानुमानशब्दैरद्वैतवाक्यानां विरोधे परिहृते प्रमाणान्तरेण विरोधःशङ्कापदमेव नाधिरोहति।

तथाहि, उपमानं तावच्छक्तिग्राहकत्वेन नियतविषयकं न भेदमवगाहते, न च सादृश्यादेर्भेदनिबन्धनत्वात् भेदसाधकत्वम्, व्यावहारिकभेदेनैव तदुपपत्तेः। अनुमानविरोधपरिहारादेव तत्तुल्ययोगक्षेमार्थापत्तिविरोधोऽपि निरस्तो-वेदितव्यः।

अभेदश्रुत्यन्यथानुपपत्तिप्रसूतार्थापत्तेरेव प्रबलत्वाच्च। अनुपलब्धिविरोधोऽपि नास्ति, प्रत्यक्षविरोधपरिहारेण दत्तोत्तरत्वात्। न च यदि जीवेश्वरयोरभेदः स्यात् तदुपलभ्येत नोपलभ्यते अतो नास्तीत्यनुपलब्ध्या अभेदश्रुतीनां बाध इति वाच्यम्—अनुपलब्धिमात्रस्याभावग्राहकत्वे अतिप्रसङ्गात्। आत्मनः परममहदभेदस्यापि अनुपलब्धिबाधोपपत्तेः। न च महत्त्वस्यायोग्यत्वात् योग्यानुपलब्धेश्चाभावग्राहकत्वान्न तत्र तद्भेदग्रह इति वाच्यम्—ईश्वरगतसर्वज्ञत्वादेरपि जीवस्यायोग्यत्वेन तद्भेदस्यापि गृहीतमशक्यत्वात्।

अस्तु वा ईश्वराद्भेदग्रहस्तथापि नौपनिषदाभेदविरोधः। न सर्वज्ञत्वकिंचिज्ज्ञत्वादिविशिष्टयोरभेदः श्रुत्यर्थः। किन्तूभयानुगतशुद्धचैतन्यस्याभेदः। न च तत्रानुपलब्धिबाधः आत्मनश्चैतन्यात्मकतया प्रकाशमानस्य स्वरूपतो भेदानवभासात्। नचैवं चैतन्यात्मना अभेदस्य इदानीमपि भासमानत्वात् तत्त्वमस्यादिवाक्यवैयर्थ्यम्, शास्त्रवैयर्थ्यम्, इदानीमपि मुक्त्यापत्तिश्चेति वाच्यम्—निरतिशयसत्यज्ञानानन्दाभेदस्येदानीं प्रत्यक्षत्वाभावात्।

वस्तुतः सत्यज्ञानानन्दात्मकत्वेपि अविद्यया कल्पितभेदसत्त्वेन तदभेदस्याविद्याऽवृतत्वात् तत्त्वमस्यादिना अभेदापरोक्षे तदावारकाज्ञाननिवृत्तेः।

ननु वाक्यप्रमेयोऽभेदः धर्मिस्वरूपं वा तदतिरिक्तं वा ?, आद्ये अहमिति ज्ञानेनैव तदपि विषयीकृतमिति वाक्यानुसन्धानवैयर्थ्यम्। द्वितीये अद्वैतहानिरिति चेन्न, अभेदस्य स्वरूपरूपत्वेऽपि तद्धियः सामग्रीविशेषापेक्षत्वोपपत्तेः। यथा प्रतियोगित्वाधाराधेयत्वादीनां स्वरूपरूपत्वेऽपि तत्तद्विशेषणज्ञानादिविशेषसामग्रीजन्यज्ञानविशेषज्ञेयत्वं, तद्वत्सत्यज्ञानानन्दाद्यात्मकपरमात्माभेदस्य स्वरूपरूपत्वेऽपि तत्त्वमस्यादिवाक्यगततत्त्वंपदवाक्यार्थाद्यनुसन्धानपूर्वकतत्त्वमस्यादिवाक्यैकगम्यत्वोपपत्तेः। तादृशवाक्यजन्याभेदज्ञानमेव अविद्यानिवर्तकमिति श्रुतिबलात्कल्पनाच्च। प्रमेयवदितिज्ञानात्संशयाद्यनुवृत्त्या स्वरूपविशेषविषयत्वेन संशयादिपरिपन्थित्वस्य सर्वसंप्रतिपत्तेश्च।

अत एव ब्रह्मनिर्विकल्पकं न विरोधि समानप्रकारत्वेनैवान्यत्र ज्ञानस्य विरोधकल्पनादिति निरस्तम्। प्रकारत्व-

विवक्षायामपि स्वरूपविशेषविषयत्वस्य आवश्यकत्वेन लाघवेन स्वरूपरूपविषयत्वेनैव विरोधकल्पनात् । तस्माद-विद्यया अभेदानुपलम्भसम्भवान्नाद्वैतश्रुतेरनुपलब्धिविरोधसम्भव इति ह्यनयोर्मानान्तरत्वेऽपि नाद्वैतबाधकत्वं, तस्माद्द्वैतश्रुतीनां न प्रमाणान्तरविरोधगन्धोऽपीति सर्वमवदातम् ।

भेदनिरासप्रकरणं सम्पूर्णम् ।

नमस्ते जगतस्सृष्टिस्थितिसंहारहेतवे ।
सच्चिदानन्दबोधाय विभवे शम्भवे नमः ॥

मानाभावान्निषिद्धत्वात् लक्षणस्यासमन्वयात् ।
फलाभावादसत्यत्वान्न शरीरं हरेर्जगात् ॥

वृक्षस्य स्वगतो भेदः पत्रपुष्पफलादिभिः ।
वृक्षान्तरात्सजातीयो विजातीयःशिलादिभिः ॥

ऐक्यावधारणाद्द्वैतप्रतिषेधैस्त्रिभिः क्रयात् ।



